श्रीआत्मानन्द-ग्रन्थरत्नमाला-द्वाविंशं रत्नम् (२२)

वाचनाचार्यसोममण्डनविरचितं

# श्रीरत्नपालनृपकथानकम् ।

पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयान्तिषच्चतुरविजयोपदिष्ट-
खेडावास्तव्य-प्राग्वाट( पोरवाड )-केवलचन्द्रतनूजसाकरचन्द्रस्य द्रव्यसाहाय्येन
प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर

इदं पुस्तकं मुंबय्यां **वल्लभदास-त्रिभुवनदास गांधी** सेक्रेटरी **आत्मानंदसभा भावनगर** इत्यनेन
**निर्णयसागर**मुद्रालये कोलभाटवीथ्यां २३, तमे गृहे रा. ये. शेडगे. द्वारा मुद्रयित्वा प्रकाशितम्

वीरसंवत् २४३९. आत्मसंवत् १७. विक्रमसंवत् १९६९.

अर्हम्

## ॥ प्रस्तावना ॥

अस्य दानमाहात्म्यप्रतिबद्धस्य श्रीरत्नपालनृपकथानकस्य कर्त्तारो वाचनाचार्यश्रीसोममण्डनाभिधानाः श्रीवृहत्तपागच्छशृङ्गारहारोपमयुगोत्तमाचार्यपुरन्दरश्रीमन्मुनिसुन्दररसूरीणां विनेया अभूवन्, इति कथानकस्यास्य प्रशस्तौ स्फुटमेव । यद्यपि ग्रन्थकर्तृभिरत्र स्वसत्तासमयः क्वापि नोपनिबद्धस्तथापि ग्रन्थस्यास्य प्रशस्तिमध्यवर्त्तिना—

"मुनिसुन्दरसूरीश-पट्टे विजयिनोऽधुना । श्रीरत्नशेखरगणाधीशा वः शिवसम्पदे ॥"

इत्येतेन पद्येन श्रीरत्नशेखरसूरीणां सत्तासमये आत्मनोऽपि सत्तासमयः प्रकटीकृतस्तैः; किञ्च श्रीमन्मुनिसुन्दरसूरिरत्नशेखरसूर्योर्विद्यमानत्वं त्वेताभ्यामेव स्वकृतेष्वनेकग्रन्थेषु महोपाध्यायश्रीमद्धर्मसागरगणिविरचितायां पट्टावल्यां च विक्रमार्कीयपञ्चदशशताब्द्यां प्रकटितमेव, अतः श्रीमन्मुनिसुन्दरशिष्यत्वेनामीषामपि समयोऽनन्तरोक्त एवेति प्रतिपादने नात्रासमीचीनम् ।

एतद्ग्रन्थप्रणेतृभिरन्येऽपि ग्रन्थाः कृता भवेयुः परं कति किंविषयाः ? । इति नाद्यापि निर्णयपथमवतीर्णम् ।

अस्मिन् कथानके दानमाहात्म्यं विवृण्वद्भिः कविभिरादौ परस्परसंजातविवादानां दानशीलतपोभावानां वादनिराकरणयुक्त्युद्धट्टनम्, तदनन्तरं कथानायकस्यास्य रत्नपालनृपतेर्जन्मतः समारभ्य सुरसद्मप्राप्तिपर्यन्तं सुपात्रप्रासुकपा-

नीयदानफलोपभोगाविर्भूतानेकाश्चर्यावहस्य चारुचरित्रस्याविष्करणम्, अस्य पट्टराज्ञ्याः शृङ्गारसुन्दर्याः समुत्पन्नेऽपि गहत्युपसर्गे शीलरक्षादृढत्वोद्भावनम्, प्रासङ्गिकोदाहरणनिरूपणम्, पूर्वभवस्वरूपशंसनम्, इत्यादि समग्रमपि चरित्रं व्यावर्णितमस्ति; तत्तु स्वयमेवावभोत्स्यते बुद्धिमद्भिरिति नास्माकमत्रातिकथनीयम् ।

एतत्कथानकपुस्तकगवेषणापरायणेन मया भूयो भूयः प्रायतिपि परं केवलं श्रीमन्मोहनलालमुनीनां सूर्यपुर ( सुरतबन्दर ) स्थज्ञानमन्दिरात्प्रायो नातिशुद्धाशुद्धं पुस्तकद्वितयमेव संप्राप्तम्, एतन्मात्रशोधनसाधनावलम्बनेनैव सूक्ष्मदृष्ट्या संशोधितेऽप्यत्र निबन्धे मदीयदृष्टिदोषेणाक्षरयोजकदोषेण वा यत्र क्वचनाशुद्धिः कृता जाता वा भवेत्तत्र संशोधनीयं शुद्धशेमुषीसंशोधितकल्मषैः कृपालुभिरिति प्रार्थयते—

प्रवर्त्तकश्रीमत्कान्तिविजयपादपाथोजपरागः

प्रकल्पिताञ्जलिः

चतुरविजयो मुनिः

ता. १–१–१३
( खेडा )

॥ अर्हम् ॥

॥ परमगुरुश्रीमद्विजयकमलसूरिपादपद्मेभ्यो नमः ॥

श्रीमद्वाचनाचार्यसोममण्डनविरचितं

# ॥ श्रीरत्नपालनृपकथानकम् ॥

श्रेयःश्रीसद्मने तस्मै, नमः श्रीनाभिजन्मने । यन्नामापि नृणां दत्ते, कल्पशाखीव कामितम् ॥ १ ॥ दानं शीलं तपो भावश्चेति धर्मश्चतुर्विधः । श्रियां हेतुर्भवाम्भोधिसेतुः केतुर्[1]महापदाम् ॥ २ ॥ तत्र जानीत चोत्कृष्टं, दानं यत्प्राग्जिनैरपि । दानाद्यन्योन्यवादोक्तियुक्त्या तद्वदितं गुरु ॥ ३ ॥ तथाहि—

दानशीलतपोभावा, मुक्तिमार्गस्ततोऽन्यदा। मिथस्ते विवन्दते स्म, स्वस्वमाहात्म्यगर्विताः ॥ ४ ॥ दानमूचेऽहमेवाऽस्मि, मुक्तेर्मुख्यं निवन्धनम् । सहकारि तु तत्राऽन्यत्सर्वं शीलादि बुध्यताम् ॥ ५ ॥ मयैवाऽऽरोपितं प्रौढिमियतीमेकजन्मना । शिवं गमी शालिभद्रो, जानात्येतज्जगत्त्रयम् ॥ ६ ॥ यद्दत्तमाज्यं साधुभ्यो, धनसार्थेशजन्मनि । तेनाऽभूच्छ्रीयुगादीशः, स त्रैलोक्यपितामहः ॥ ७ ॥ पाणेरिक्षुरसं दातुः[2], प्रपौत्रस्यापि यत्प्रभुः । अधः पाणिमधान्नूनं, तन्माहात्म्यं मम स्फुटम् ॥ ८ ॥

१ अत्र केतुशब्देनापदां नाशकत्वं सूचितम् । २ 'दातुः' इति तृना योगे षष्ठ्यभावः ।

ये न कस्यापि साहाय्यमीहन्ते कर्मणि क्वचित् । दातारं तेऽप्यपेक्षन्ते, प्रवृत्ता मुक्तिवर्त्मनि ॥ ९ ॥ किं वहुना । निधयो नव यत्पुंसः, सिद्धयोऽष्टौ च सद्मनि । यच्चाऽन्यदपि सद्भोगारोग्याद्यं तत्फलं हि मे ॥ १० ॥

शीलं तदाख्यत्सोत्कर्षं, मोक्षाङ्गेष्वत्र मुख्यता । ममैव युक्त्या घटते, न त्वन्येषां कथञ्चन ॥ ११ ॥ इहोद्भूताद्भुतप्रातिहार्यो यत्प्राप निर्वृतिम् । श्रेष्ठी सुदर्शनस्तत्र, हेतुः कोऽपि न मत्परः ॥ १२ ॥ सत्यः सीतासुभद्राद्याः, साधयन्ति स्म यत्पुरा । तत्तद्दुःसाधकृत्यानि, तन्माहात्म्यं हि मेऽनघम् ॥ १३ ॥ स्वेच्छाचार्यपि सावद्यनिरतः कलिकौतुकी । मामाराध्य मनःशुद्ध्या, नारदो मोक्षमाप्नुयात्[1] ॥ १४ ॥ अन्यैरप्युक्तम्—

"[2]कैलिकारओऽवि जणमारओऽवि सावज्जजोगनिरओऽवि । जं नारओऽवि सिज्झइ, तं खलु सीलस्स माहप्पं" ॥१॥

नानुज्ञातं निषिद्धं वा, किञ्चिदन्यज्जिनैः क्वचित् । संसारवीजं त्वब्रह्म, सर्वत्रापि न्यषिध्यत ॥ १५ ॥ यदुक्तम्—

"[3]नवि किञ्चि अणुन्नायं, पडिसिद्धं वावि जिणवरिंदेहिं । मुत्तुं मेहुणभावं, न तं विणा रागदोसेहिं" ॥ १ ॥

जितेन्द्रियत्वं यत्तस्माद्विनयश्चेत्यतः क्रमात् । पुंसा स्युः सम्पदोऽपीत्थं, सम्पन्मूलमहं ध्रुवम् ॥ १६ ॥ यदुक्तम्—

"जितेन्द्रियत्वं विनयस्य कारणं, गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोऽनुरज्यते, जनानुरागप्रभवा हि सम्पदः" १।

तन्ममेत्याद्यसम्भाव्याऽवदातविदितात्मनः । शतांशमपि नाऽर्हन्ति, धर्मा दानादयो ध्रुवम् ॥ १७ ॥

---

१ 'आस्रवान्' इति भवेत् । २ "कलिकारकोऽपि जनमारकोऽपि सावद्ययोगनिरतोऽपि । यन्नारदोऽपि सिद्ध्यति तत् खलु शीलस्य माहात्म्यम्" ॥ इति च्छाया । ३ "नापि किञ्चिदनुज्ञातं प्रतिषिद्धं वाऽपि जिनवरेन्द्रैः । मुक्त्वा मैथुनभावं न तद्विना रागद्वेषाभ्याम्" ॥ इति च्छाया ।

तपस्तदाख्यद्दानादेर्गुरुता तावदिष्यते । जगत्युज्जागरं यावन्मन्माहात्म्यं न वीक्ष्यते ॥ १८ ॥ दुःसाधकार्ये हरयक्ष-क्रिणश्च महौजसः । इष्टसिद्धिप्रतिभुवं मामेवोपासते सदा ॥ १९ ॥ यदुक्तम्—

"[1]अथिरंपि थिरं वंकंपि उज्जुअं दुलहंपि तह सुलहम् । दुस्सज्झंपि सुसज्झं, तवेण सम्पज्जए कज्जम्" ॥ १ ॥

भवैरनन्तैराचीर्णं, दुष्कर्मानन्तमप्यहम् । क्षणेन भस्मसात्कुर्वे, वह्नी राशिमिवैधसाम् ॥ २० ॥ अन्यैरप्युक्तम्—

"दीप्यमाने तपोवह्नौ, बाह्ये चाऽभ्यन्तरेऽपि च । यमी जरति कर्माणि, दुर्जराण्यपि तत्क्षणात्" ॥ १ ॥

निकाचितेभ्यः कर्मभ्यो, द्विधैवात्मा हि मुच्यते । अनुभूय स्वयं तानि, कृत्वा वा भस्मसान्मया ॥ २१ ॥ यदुक्तं श्रीसीमन्धरस्वामिनापि—

"[2]पावाणं च खलु भो कडाणं कम्माणं पुव्विं दुच्चिण्णाणं दुप्पडिकन्ताणं वेइत्ता मुक्खो, नत्थि अवेइत्ता तवसा वा झोसइत्ता" इत्यादि ॥

निषिद्धाचरणाद्युत्थैः, पापैरात्मा मलीमसः । सम्यग्गुरूपदिष्टेन, मयैवाऽऽशु विशुध्यति ॥२२॥ ब्रह्मस्त्रीभ्रूणगोघातपातकैर्नरकातिथिः । दृढप्रहारी शरणं, प्राप्तो नीतः शिवं मया ॥२३॥ प्रक्षीणसप्तकः साक्षाज्जिनमाराधयन्नपि । श्रेणिकः प्राप नरकं, विमुक्तः करतो मया ॥२४॥ अन्वयव्यतिरेकाभ्यां, दृष्टप्रत्ययमप्यहम् । दानशीलादिमाहात्म्यैः, कथं पश्चात्क्रिये बुधैः ॥२५॥

---

१ "अस्थिरमपि स्थिरं वक्रमपि ऋजुकं दुर्लभमपि तथा सुलभम् । दुःसाधमपि सुसाधं तपसा संपद्यते कार्यम्" ॥ इति च्छाया । २ "पापानां च खलु भोः कृतानां कर्मणां पूर्वं दुश्चीर्णानां दुष्प्रतिक्रान्तानां वेदयित्वा मोक्षो, नास्ति अवेदयित्वा तपसा वा क्षपयित्वा" ॥ इति च्छाया ।

दानादीन्यवदद्भावस्तदा गर्वेणः; मत्पुरः । किं न गर्ज्जन्ति लज्जध्वे, मदाप्य महिमश्रियम् ॥ २६ ॥ यदुक्तम्—

"भरिऊण जलं जलया, जस्स पभावेण उन्नइं पत्ता । तस्सेव पुणो उवरिं, गज्जन्ता किं न लज्जन्ति" ॥ १ ॥

यथात्मानं विना कायो, यथा पुष्पं फलं विना । विनाम्भश्च सरो यूयं, तथा सर्वाणि मां विना ॥२७॥ यदन्यत्राप्युक्तम्—

"धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं, क्रियाकाण्डं चण्डं रचितमवनौ सुप्तमसकृत् ।
तपस्तप्तं तीव्रं चरणमपि चीर्णं चिरतरं, न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलम्" ॥ १ ॥

निबध्य निबिडैः पाशैर्मोहेन भवचारके । क्षिप्तोऽपि भरतश्चक्री, मयैवामोच्यत क्षणात् ॥२८॥ मुख्यं मोक्षाङ्गमासाद्य, मामाद्यभगवत्प्रसूः । पूर्वमप्राप्तधर्मापि, क्षणान्मोक्षमुपेयुषी ॥ २९ ॥ आषाढभूतिः कपटी, भ्रष्टोऽपि ब्रह्मवर्त्मनः । प्रापितः परमब्रह्म, निरुध्यान्यगतीर्मया ॥ ३० ॥ कर्मभिः कपिवद् वंशे, नर्त्यमानः स रागहृत् । प्रापेलातीसुतः सद्यो, मच्छुद्ध्या ज्ञानमुज्ज्वलम् ॥ ३१ ॥ मदीयाशुद्धिशुद्धिभ्यां, बन्धमुक्ती नृणां क्षणात् । अत्र प्रसन्नचन्द्रर्षिः, स्पष्टमिष्टो निदर्शनम् ॥ ३२ ॥ विरताऽविरतभ्रातृद्वयवृत्तनिदर्शनात् । प्रामाण्यं मम सर्वत्र, क्रियायास्तु नहि क्वचित् ॥ ३३ ॥ इत्थं दानादयो धर्माः, स्वस्वमाहात्म्यगर्विताः । विवदन्तो मिथः प्रापुः, पार्श्वे तीर्थकृतः प्रभोः ॥ ३४ ॥ समानदृष्टिः सर्वत्र, वीतरागः स सर्ववित् । विवादं भङ्क्तुमिति तान्, स्वोपज्ञं न्यगदत्तदा ॥ ३५ ॥

---

१ मत्तः ( आप्य लब्ध्वा ) । २ "भृत्वा जलं जलदा यस्य प्रभावेण उन्नतिं प्राप्ताः । तस्यैव पुनरुपरि गर्जन्तः किं न लज्जन्ते" ॥ इति च्छाया ।

सकृदेकैकपर्यायग्राहिणी वाग् नयः स्मृतः । प्रमा तु युगपन्नैकवस्तुधर्मावलम्बिनी ॥ ३६ ॥ नया ह्यन्योन्यसापेक्षाः, सर्वज्ञैः सुनया मताः । अन्योन्यमत्सरक्षीणविषया दुर्नयाः पुनः ॥ ३७ ॥ जोगे जोगे जिणसासणम्मि दुक्खक्खया पउज्जन्ते । इक्किक्कम्मि अणन्ता, वट्टन्ता केवली जाया ॥ ३८ ॥ इति प्रत्येकमप्यत्र, प्राप्य मोक्षाङ्गतां समे । मिथो मत्सर-मालम्ब्याऽधुना मा भूत दुर्नयाः ॥ ३९ ॥ प्रायः सत्पात्रसश्रद्धदानाच्छीलाच्च निर्मलात् । नैकेऽपि तपसस्तीव्रात्सद्भावाच्च शिवं गताः ॥ ४० ॥ न्यूनाधिकत्वं चान्योन्यमथ चेज्ज्ञातुमिष्यते । शृणुताऽवहितीभूय, तदपि ज्ञापयामि वः ॥ ४१ ॥ शील ! चन्द्रकरोन्मीलदतिनैर्मल्यलील ! हे ! । निर्निदान ! तपस्तीव्रभावने ! चाघनाशिनि ! ॥४२॥ एकस्यैव भवेन्मुक्ति-र्युष्मदाराधनाद् ध्रुवम् । दानात्प्रदातुश्चादातुर्द्वयोः स्पष्टमिहेक्ष्यते ॥ ४३ ॥ युग्मम् ॥ शास्त्रान्तरेऽप्युक्तम्—

"हे ! शीलचन्द्रकरलील ! भवाम्बुराशिनिस्तारणोडुप ! तपः ! शृणु भावने ! त्वम् ।
एकस्य सिद्धिरभवद्भवतां प्रसादाद्, दानात्तु दातुरपरस्य च मुक्तिमार्गः" ॥ १ ॥

अरक्तद्विष्टमनसः, सर्वज्ञस्य मुखाम्बुजात् । निशम्य सम्यगाधिक्यमिति दानस्य यौक्तिकम् ॥ ४४ ॥ हीणामात्सर्य-मुत्सृज्य, धर्माः शीलादयस्त्रयः । ततः स्म वहु मन्यन्ते, दानं न्यस्यात्मनो धुरि ॥ ४५ ॥ युग्मम् ॥ संयोगारोग्यसद्भोगभा-ग्यसौभाग्यसम्पदाम् । दानं निदानं सर्वज्ञैरत्रामुत्र च वर्ण्यते ॥ ४६ ॥ इयर्त्ति स्फूर्त्तिमतुलां, कीर्त्तिर्दानेन सर्वतः । आस्ये प्रशस्या दीप्तिश्च, दानेनोदयिनी नृणाम् ॥ ४७ ॥ आसतां स्वजना दूरे, प्राच्यप्रेमवशीकृताः । दानेनावर्जिता मूर्ध्ना,

१ " योगे योगे जिनशासने दुःखक्षयाय प्रयुज्यमाने । एकैकस्मिन् अनन्ता वर्तमानाः केवलिनो जाताः " । इति च्छाया ॥

विद्विषोऽपि वहन्त्यपः ॥ ४८ ॥ भूतानि प्रतिकूलानि, निखिलान्यपि तत्क्षणात् । वशीभवन्ति दानेन, दूरितोत्सर्पिपाप्मना ॥ ४९ ॥ दुर्वारा दुरितव्राताः, प्रोद्भूताः प्राच्यकर्मभिः । प्रायः पुंसां प्रणश्यन्ति, दानप्रतिहतौजसः ॥ ५० ॥ गुणानपेक्षं सर्वत्र, मुग्धैस्तद्देयमन्वहम् । क्वापि सत्पात्रमप्येवं, यन्मेलिष्यति कर्हिचित् ॥ ५१ ॥ यदुक्तम्—

"सर्वत्र ददतो दातुः, पात्रयोगोऽपि सम्भवेत् । वर्षन् क्षारार्णवेऽप्यब्दो, मुक्तात्मा क्वापि जायते" ॥ १ ॥

शुद्धं सकृदपि प्रत्तं[1], सत्पात्रे श्रद्धया ध्रुवम् । कल्पतेऽनल्पलाभाय, स्वल्पमप्यचिरान्नृणाम् ॥ ५२ ॥ यदुक्तम्—

"व्याजे स्याद् द्विगुणं वित्तं, व्यवसाये चतुर्गुणम् । कृषौ शतगुणं प्रोक्तं, पात्रेऽनन्तगुणं पुनः" ॥ १ ॥

इतिहासेऽप्युक्तम्—

"बह्वप्यश्रद्धया दत्तं, नष्टमाहुर्मनीषिणः । वार्यपि श्रद्धया दत्तमानन्त्यायोपकल्पते" ॥ १ ॥

तत्त्वार्थिभिः पुनः सम्यक्, पात्रापात्रविवेचकैः । निश्चित्यैव गुणैः पात्रं, श्रद्धादानं विधीयते ॥ ५३ ॥ दत्ते पुनः कुपात्रेभ्यः, श्रद्धादाने विवेकिभिः । तदीयदुश्चरित्राणां, कृतं स्यादुपबृंहणम् ॥ ५४ ॥ देयं सर्वत्र दीनादौ, दयादानं तु तैरपि । सार्वैर्निषिद्धं यत्सर्वजनीनैस्तन्नहि क्वचित् ॥ ५५ ॥ रुच्चैः कृषिर्यथोत्कृष्टा, क्षेत्रबीजाम्बुदाऽनिलैः । विफला मध्यमा वा स्याद्व्यपायेऽन्यतरस्य तु ॥ ५६ ॥ दानं तथोत्तमं पात्रवित्तभावानुमोदनैः । विफलं मध्यमं वा स्याद्व्यपायेऽन्यतरस्य तु ॥ ५७ ॥ श्रद्धया निहितं दानं, सत्पात्रे समये नृभिः । शुक्तौ स्वाताविवाऽब्देन, वारि स्यान्मौक्तिकश्रिये ॥ ५८ ॥ महर्घ्या-

---

१ प्रदत्तम् ।

ण्यासतां खाद्याऽशनस्वाद्यानि सर्वथा । सत्पात्रे समये दत्तमम्भोऽपीष्टार्थसिद्धये ॥ ५९ ॥ तृषार्त्तेषु यथा भीष्मग्रीष्मर्त्तौ शुद्धसाधुषु । दत्तं नीरमभूद्रत्नपालस्याऽद्भुतसम्पदे ॥ ६० ॥ तथाहि—

अस्तीह भरतक्षेत्रे, पुरं पाडलिपुत्रकम् । पुरुहूतपुरस्पर्द्धि, समृद्धिसुषमास्पदम् ॥ ६१ ॥ हित्वा सहानवस्थानविरोधं प्रथितं मिथः । यत्र लक्ष्मीसरस्वत्यौ, प्रीत्या पौरेषु खेलतः ॥ ६२ ॥ पश्यन् स्निग्धदृशा सर्वा, निजापत्यमिव प्रजाः । षण्णवत्या नृपगुणैरर्जितोर्जितसद्यशाः ॥ ६३ ॥ प्रतापतपनस्तत्र, त्रासिताऽखिलशात्रवः । भूपालो विनयात्पालः, समभून्भूरिविक्रमः ॥ ६४ ॥ युग्मम् ॥ माररूपः कुमारोऽस्य, कुमारातुलविक्रमः । रत्नपालः कुलव्योमोद्द्योतप्रद्योतनोऽभवत् ॥ ६५ ॥ द्वासप्ततिकलाशाली, कामकेलीवनं क्रमात् । यौवनं युवतीप्रीतिजननं भजति स्म सः ॥ ६६ ॥ वीरसेनस्य भूभर्त्तुः, पुरे हंसपुरेऽन्यदा । पुत्र्याः शृङ्गारसुन्दर्याः, स्वयंवरणमण्डपे ॥ ६७ ॥ रूपसौभाग्यभाग्याद्यैर्गुणैः सर्वत्र विश्रुतः । ससैन्यः पितुरादेशाद्दूताहूतो जगाम सः ॥ ६८ ॥ युग्मम् ॥ अन्येऽपि भूभुजस्तत्र, महोत्साहा महौजसः । स्वस्वसैन्यैः सहाऽजग्मुर्दूताऽऽहूताः सहस्रशः ॥ ६९ ॥ शुभेऽह्नि सदलङ्काराः, सर्वर्द्ध्या सपरिच्छदाः । निषेदिवांसस्तत्रैत्य, मञ्चोन्मञ्चेषु ते पुनः ॥ ७० ॥ चतुःषष्टिकलादक्षा, शुभसर्वाङ्गलक्षणा । स्वयंवरस्रजं पाणौ, बिभ्रती स्वसखीवृता ॥ ७१ ॥ सा तत्राऽद्भुतशृङ्गारं, कृत्वा शृङ्गारसुन्दरी । आगमत् त्रिजगज्जैत्री, शक्तिर्मूर्त्तेव मान्मथी ॥ ७२ ॥ युग्मम् ॥ अथ तस्याः पुरोभूय, प्रतीहारः पटिष्ठवाग् । प्रत्येकं तान् नृपानूचे, नामवंशादिकीर्त्तनैः ॥ ७३ ॥ तथाहि—

---

१ कुमारः कार्तिकेयः ।

अयं काशीश्वरः सुभ्रु !, सूरसेनः पराक्रमी । त्रिस्रोतःस्रोतसि स्वैरं, यः खेलति मरालवत् ॥ ७४ ॥ श्रूयन्ते काशिवास्तव्या, वञ्चनाचञ्चवो नराः । इत्युक्तिमात्रात्काशीशे, सा विरागमसूचयत् ॥ ७५ ॥ बलिष्ठोऽयं मधूपघ्नपतिर्मधुरवाग्मधुः । एतं वृणीष्वेत्यवदत्प्रतीहारोऽथ तां पुनः ॥ ७६ ॥ कालियाहेरिव विषैर्विनीलं यामुनं जलम् । वृन्दावनं च यत्क्रीडास्थानं तस्योच्यतेऽथ किम् ॥ ७७ ॥ उपहासगिरेत्यस्मिन्, ज्ञातेऽथाऽरुचिते पुनः । प्रतीहारः कुङ्कुणानामित्यधीशमवर्णयत् ॥ ७८ ॥ वलोऽयं वलवत्सीमा, यद्भिया किल जम्भजित् । छिनत्त्यद्यापि नाऽम्भोधि–निलीनाऽचलपक्षतीः ॥ ७९ ॥ साऽप्याऽऽख्यदिति तत्रत्या, नरा निष्कारणक्रुधः । शक्नोमि तदमुं रुष्टं, नानुनेतुं पदे पदे ॥ ८० ॥ यदुक्तम्—

"अकाण्डकोपिनो भर्त्तुरन्यासक्तेश्च योषितः । प्रसत्तिश्चेतसः कर्त्तुं, शक्रेणाऽपि न शक्यते" ॥ १ ॥

प्रतीहारोऽथ दोःस्थामधामधैर्यादिभिर्गुणैः । गौडमालवकाद्यष्टदेशाधीशानवर्णयत् ॥ ८१ ॥ गौडाः कार्यविचक्षणा वहुभुजो दुष्टा नरा मालवाष्टक्कस्वार्थपराः खसा जडधियो धूर्त्ता महाराष्ट्रजाः ॥ लाटाः केवलवाक्प्रपञ्चचतुराः क्रूराश्च कर्णाटजा, अन्तर्गूढनिवद्धवैरहृदयाः प्रायो नरा गौर्जराः ॥ ८२ ॥ तानपीत्यखिलान् सर्वगुणोपेतवरार्थिनी । देशसामान्यदोषोक्त्या, प्रत्युत्तरयति स्म सा ॥ ८३ ॥ एवं यं यं व्यतीयाय, क्ष्मापालं सा पतिंवरा । राहुग्रस्तेन्दुवच्छ्यामं, तस्य तस्याऽभवन्मुखम् ॥ ८४ ॥ यदुक्तम्—

"[२]सञ्चारिणी दीपशिखेव रात्रौ, यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे, विवर्णभावं स स भूमिपालः" ॥१॥

१ गङ्गापूरे । २ रघुवंशस्थषष्ठसर्गगतोऽयं श्लोकः; एतद्वचनावैचि त्र्येणैव दीपशिखाकालिदास इति कालिदासस्य प्रसिद्धिः ।

अथेत्याख्यत्प्रतीहारः, पश्यन्नेत्राऽमृताञ्जनम् । रत्नपालः कुमारोऽयं, कुमार इव विक्रमी ॥८५॥ सूनुर्विनयपालाह्वक्ष्मापालस्य परन्तपः । वृत्वा तदेनं सुभगं, जनुःसाफल्यमाप्नुहि ॥ ८६ ॥ तं कुमारं तदा वीक्ष्य, सा स्मेराक्षी स्मरोपमम् । मयूरीवोन्नतं मेघमतीव मुमुदे हृदि ॥ ८७ ॥ नृपान्तरेषु भ्रमणाद्भृशं श्रान्तिमुपेयुषी । तस्मिन्सर्वगुणावासे, तस्या विश्राम्यति स्म दृग् ॥ ८८ ॥ सर्वराजेषु पश्यत्सु, वरमालामथाऽक्षिपत् । सा कण्ठे रत्नपालस्य, स्नेहेन प्राच्यजन्मनः ॥ ८९ ॥ पश्यतामियतां नोऽद्य, कुलशीलादिशालिनाम् । बालस्तन्या विलासोऽयं, चेत्कर्नीं परिणेष्यते ॥ ९० ॥ भावी नस्तज्जलोत्तारो, ध्यात्वेत्यन्ये नृपास्तदा । एकीबभूवुः; सख्यं हि, समाने व्यसने भवेत् ॥ ९१ ॥ अथ तान् विकृतान्वीक्ष्य, वीरसेनः समं बलैः । एत्य जामातृरक्षायै, सर्वतोऽवहितः स्थितः ॥ ९२ ॥ तदेवोत्सर्पिमात्सर्या, निर्विचारहृदश्च ते । वीरसेनं विचारज्ञमित्याख्यन्नेकतः स्थिताः ॥ ९३ ॥ दद्या यदृच्छया राजन्नस्मादाच्छिद्य कस्यचित् । अस्मास्वन्यतरस्यैतां, गुणरत्नावनीं कनीम् ॥ ९४ ॥ मणिमालामिवानर्हां, बालां शृङ्गारसुन्दरीम् । रासभस्य न बालस्यामुष्य मृष्यामहे परम् ॥ ९५ ॥ वीरसेनस्तदेत्याख्यात्, प्रौढैरेव मनोरथैः । आयान्ति भूरिशो भूपाः, स्वयंवरणमण्डपे ॥ ९६ ॥ एक एवोद्वहेत्तेषु, प्राच्यपुण्येरितः कनीम् । अरुष्टाऽतुष्टमनसो, यान्त्यन्ये च यथागतम् ॥ ९७ ॥ व्यवहारममुं सर्वसिद्धं ज्ञातवतां हि वः । रोषतोषौ न युज्येते भाग्याधीनेऽत्र कर्मणि ॥ ९८ ॥ यदुक्तम्—

"अर्वाग्दृष्टितया लोको, यथेच्छं वाञ्छते प्रियम् । भाग्यापेक्षी विधिर्दत्ते, तेन चिन्तितमन्यथा" ॥ १ ॥

इत्याख्यद्रत्नपालश्च, मयि कन्यावृतेऽद्य वः । मन्युर्न युज्यते किन्तु, दैवे दौर्भाग्यदायिनि ॥ ९९ ॥ विशिष्य

विस्फुरत्कोपाटोपाः सर्वे नृपास्तदा । सद्यः सज्जीबभूवुस्ते, तं निहन्तुं कनीवरम् ॥ १०० ॥ अथैवं व्यमृशच्चित्ते,
वीरसेनो विषादभाग् । शान्तिकं कुर्वतां जाने, हा! वेतालोऽयमुत्थितः ॥ १०१ ॥ हर्षस्थाने विषादो वा, क्षुतं वा
भोजनक्षणे । मङ्गल्यपर्वण्येतस्मिन्, यद्रौद्रोऽयं रणागमः ॥ १०२ ॥ युग्मम् ॥ इयं कनी कुनक्षत्रा, कालरात्रि-
रिवाऽधुना । संहर्तुं सुभटश्रेणीरवतीर्णा भुवि ध्रुवम् ॥ १०३ ॥ तदेत्य कालप्रलयं, तत्र वीक्ष्य स्वहेतुकम् । प्राच्यं
स्वकर्म निन्दन्ती, सा प्रत्युत्पन्नधीः कनी ॥ १०४ ॥ किञ्चिद्विमृश्य स्वगतं, कथयित्वा च तद्रहः । चतुर्बुद्धिनिधानाय,
सचिवाय सुबुद्धये ॥ १०५ ॥ निवर्तयन्ती तुमुलं, हस्तमुत्क्षिप्य दूरतः । अवोचत्स्पष्टवाचैवं, संरब्धान् सर्वभूभुजः ॥१०६॥
त्रिभिर्विशेषकम् ॥ खननीयो गिरिर्भूपाः, कर्षणीयश्च मूषकः । तद्वदीदृग् रणारम्भो, मदर्थं युज्यते न वः ॥ १०७ ॥
कुर्वते हा! हठारूढाः, परतेजोऽसहिष्णवः । वचोमात्रकृते शूरा, राष्ट्रकोशबलक्षयम् ॥ १०८ ॥ तथापि कलहं हित्वा,
सत्त्वाढ्यः स मया समम् । काष्ठानि भक्षयत्वेत्य, यो मां परिणिनीषति ॥ १०९ ॥ तस्या वाचमिति श्रुत्वा, निवृत्ताः सम-
रोद्यमात् । अन्योऽन्यं व्यमृशन्नेवं, विस्मितास्ते महीभुजः ॥ ११० ॥ कोऽप्युपैति मृतो जातु, न महत्यपि पर्वणि । जीव-
न्निह पुमान् शस्तशतान्याप्नोति च क्रमात् ॥ १११ ॥ सुखानि सर्वाङ्गीणानि, पुण्यैरद्यात्र सन्ति नः । स्त्रीमात्रार्थं मृतौ
चात्महानिर्हास्यं जनेषु च ॥ ११२ ॥ तन्नात्र मृत्या नः कार्यं, द्रक्ष्यतेऽद्यात्मभिः परम् । कन्यार्थं म्रियमाणोऽयं, बालः
कालकटाक्षितः ॥ ११३ ॥ ज्ञापयित्वाऽथ सङ्केतं, रत्नपालाय सा धिया । कृतौपवस्ता[1] त्रिदिनीं, न्यवसत्सरितस्तटे ॥११४॥

१ कृतोपवासा ।

तावत्स्थूलतरैः काष्ठैर्विरचय्य महाचिताम् । तत्राऽधोऽचीखनन्मन्त्री, सुरङ्गां स्वनरै रहः ॥ ११५ ॥ स्नात्वा दत्त्वाऽथ दीनेभ्यस्तेषु पश्यत्सु राजसु । सा कनी रत्नपालश्च, चितामविशतामुभौ ॥ ११६ ॥ हाहाकारं च कुर्वत्सु, पौरलोकेषु सर्वतः । ज्वालितो ज्वलनस्तत्र, पार्श्वस्थै राजपूरुषैः ॥ ११७ ॥ तेन नष्टाऽध्वना तावच्चितातस्तौ कनीवरौ । निर्गत्य द्वारमावृत्य, रहः प्राप्तौ नृपौकसि ॥ ११८ ॥ प्रज्वलय्य चितां प्राप, वीरसेनोऽथ सद्मनि । विषादविस्मयापन्नाः, पौराश्चागुः स्ववेश्मसु ॥ ११९ ॥ अस्मद्धठादियं बाला, बालश्चायं मृतावुभौ । इति सानुशयाश्चाऽन्ये, नृपाः स्वस्वपुरं ययुः ॥ १२० ॥ अथ प्रेष्य द्वितीयेऽह्नि, रहस्तत्र नदीतटे । साराऽलङ्कारनेपथ्यौ, कुमारश्च कनी च तौ ॥ १२१ ॥ रोदसी बधिरीकुर्वन्, विविधातोद्यनिःस्वनैः । सम्मुखं सपरीवारस्तत्र गत्वा स भूपतिः ॥ १२२ ॥ पट्टहस्तिनमारोप्य, हर्षोत्कर्षोल्लसन्मनाः । धृतच्छत्रावुभयतो, वीज्यमानौ च चामरैः ॥ १२३ ॥ यथेच्छदानैरनृणीकुर्वाणः सर्वतोऽवनीम् । प्रावेशयत्पुरस्याऽन्तर्महैर्विश्वातिशायिभिः ॥ १२४ ॥ चतुर्भिः कलापकम् ॥ सदस्याञ्श्रावयन् सोऽथ, सदस्याप्तः ससंभ्रमम् । तमप्राक्षीन्निजोत्सङ्गे, निवेश्य नृपनन्दनम् ॥ १२५ ॥ कथं वत्स ! युवां वह्निप्रविष्टावपि जीवितौ । दिव्यालङ्कारनेपथ्यावाप्तिरेषा कुतश्च वाम् ॥ १२६ ॥ तदा सोऽपीत्यवग् राजन् !, शीलसत्त्वादिशालिनः । दाहात्माऽपि दहेदग्निर्देहिनो नहि कर्हिचित् ॥ १२७ ॥ निःसमं सत्त्वमालोक्य, शीलं चाऽतीव निर्मलम् । आवयोस्तोषमभजत्सप्रियश्च दिवस्पतिः ॥ १२८ ॥ ज्वालाकरालाज्ज्वलनात्ततस्तेनाऽपहृत्य नौ । आनाययत्सुरैः सद्यः, स्वर्गं स गुणिवत्सलः ॥ १२९ ॥ इच्छोपनतसर्वाङ्गसुखसम्पत्तयः सुराः ।

१ पश्चात्तापतप्ताः । २ अकथयत् ॥

यत्राल्पपुण्यैर्दुष्प्रापैः, प्राच्यं सत्कर्म भुञ्जते ॥ १३० ॥ सर्वाङ्गीणसुखाभोगभाजो येऽत्र नृपादयः । यत्र सर्वजघन्यर्द्धैः,
शतांशं प्राप्नुयुर्न ते ॥ १३१ ॥ आवां हि सर्वद्रष्टव्याऽवधिं तं वीक्ष्य तादृशम् । मन्वहे सफलं स्रष्टुर्दृष्टिसृष्टिश्रमं तदा
॥ १३२ ॥ ईदृग्महार्द्धिमुदिता, अपि ते त्रिदशाः परम् । राजन् ! मर्त्यत्वमीहन्ते, नव्यपुण्यार्जनार्थिनः ॥ १३३ ॥ यदुक्तं
श्रीमति स्थानाङ्गे—

"[3]तओ ठाणाइं देवेहिंपीहिज्जा तं जहा माणुस्सगं भवं आरियखित्ते जम्मं सुकुलपच्चाइअं जाइं" ॥

अथाऽसपत्नं सर्वोर्वीराज्यं वत्साऽमुहि ह्यमुम् । वरं प्रादाद्धरिस्तुष्टः, सर्वाङ्गालङ्कृतीश्च मे ॥ १३४ ॥ त्वमखण्डमवै-
धव्यं, शुद्धशीले सदाऽऽमुहि । आनन्द्येत्याऽशिषा चास्यै, शची स्वालङ्कृतीर्ददौ ॥ १३५ ॥ प्राग् निजापत्यविर-
होऽश्रुतदुःखाऽनभिज्ञयोः । पित्रोर्दुःखमपीदानीं, मा भूद्युष्मद्वियोगजम् ॥ १३६ ॥ स वास्तोष्पतिरित्यऽन्यदुःखदु-
खितहृत्पुनः । आवां हि प्रैषयत्क्षिप्रं, मर्त्यलोकेऽत्र सम्प्रति ॥ १३७ ॥ प्रवृत्तिमेतां परितः, पारम्पर्यात्प्रसारिणीम् ।
अत्याश्चर्यमयीं श्रुत्वा, नृपास्तेऽपि विरोधिनः ॥ १३८ ॥ स्वं निःसत्त्वतया तैस्तैः, सत्फलैर्वञ्चितं तदा । मन्यमानाः स्वदु-
र्दैवमेवाऽनिन्दन् विषादिनः ॥ १३९ ॥ युग्मम् ॥ इत्थं पाणिग्रहमहप्रत्यूहे प्रलयं गते । वीरसेननृपो हृष्टः, सुलग्ने सुमहो-
त्सवम् ॥ १४० ॥ रूपसौभाग्यलावण्यैः, स्मरेणेव वपुष्मता । रत्नपालकुमारेण, तां कन्यामुदवाहयत् ॥ १४१ ॥ युग्मम् ॥

१ स्वर्गम् । २"त्रिभ्यः स्थानेभ्यः देवा अपि स्पृहयेयुः तद्यथा मानुष्यकं भवं आर्यक्षेत्रे जन्म सुकुलप्रत्ययिकीं जातिम्" । इति च्छाया । ३इन्द्रः ।

सत्याप्यमानः स्वजनैस्तथ्यैरातिथ्यकर्मभिः । रत्नपालः कियत्कालं, तत्राऽस्थाच्छ्वशुरौकसि ॥ १४२ ॥ महातीर्थ इव स्थातुं, सुचिरं श्वशुरौकसि । न युज्यते हि महतां, यन्महत्त्वक्षितिस्ततः ॥ १४३ ॥ यदुक्तम्—

"चिरं पितृगृहे स्त्रीणां, नराणां श्वशुरौकसि । वासश्चैकत्र यमिनां, नूनं हास्यास्पदं जने" ॥ १ ॥

महानुभावः स सुधीरिति सम्यग् विदन् हृदि । चलनोन्मुख एवास्थात्परं स्वनगरं प्रति ॥ १४४ ॥ अर्थतो विशेषकम् ॥ गजाश्वमणिमुक्ताद्यैः, क्ष्माभुजा सत्कृतोऽथ सः । समं शृङ्गारसुन्दर्या, ससैन्यः स्वपुरेऽगमत् ॥ १४५ ॥ परिणीयागतस्याऽस्य, पुरान्तः प्रवरोत्सवैः । प्रवेशं कारयामास, पिता प्रमुदिताशयः ॥ १४६ ॥ महौजसं महोत्साहमाकलय्य तमङ्गजम् । राज्ये न्यवीविशत्सोऽथ, मन्त्रिसामन्तसाक्षिकम् ॥१४७॥ शिक्षामदादिति स्नेहात्परिणामहितां पुनः । दण्डनीया दुरात्मानः, पालनीयाश्च साधवः ॥ १४८ ॥ यदुक्तम्—

"दुष्टस्य दण्डः सुजनस्य पूजा,न्यायेन कोशस्य च सम्प्रवृद्धिः। अपक्षपातो रिपुराष्ट्ररक्षा,पञ्चैव यज्ञाः कथिता नृपाणाम्"॥१॥

अविश्वास्याः श्रियं हृत्वा, कर्षणीयाः स्वनीवृतः । विश्वासार्हाः पुनर्वत्स !, प्रापणीयाः परां श्रियम् ॥ १४९ ॥ पुत्रा मित्राणि पितरौ, लोभेन भ्रातरोऽपि वा । राज्येऽन्योन्यं निहन्यन्ते, तेनैतत्सुमलीमसम् ॥ १५० ॥ न विश्वसेदमित्रस्य, मित्रस्यापि न विश्वसेत् । इदं पद्यं विदन् वत्स !, मा कस्याप्यत्र विश्वसीः ॥ १५१ ॥ सोऽथ संविग्नहृत्कृत्वा, चैत्येष्वष्टाह्निकामहम् । दत्त्वा दानं च दीनादौ, जैनीं दीक्षामुपाददे ॥ १५२ ॥ सुदुस्तपं तपस्तप्त्वा, स्वाध्यायाध्ययनोद्यतः । शुभध्यानाऽधिरूढात्मा, कालेऽभूत्स्वर्गसौख्यभाक् ॥ १५३ ॥ रत्नपालोऽथ भूपालः, प्रतापी पालयन्प्रजाः । नैकाः स्वयं-

वरायाताः, परिणिन्ये नृपाङ्गजाः ॥ १५४ ॥ श्रृङ्गारसुन्दरीमुख्याः, पत्न्यस्तस्याऽभवन्क्रमात् । सहस्रं रूपसौभाग्यलावण्यललितश्रियः ॥ १५५ ॥ जयनाम्नि महामात्ये, राजनीतिविदप्यसौ । राज्यभारं निवेश्याऽथ, कृत्वा दुग्धमिवौतुसात् ॥१५६॥ निश्चिन्तः पञ्चधा कामभोगान्भुङ्क्तेऽतिशायिनः । नित्यमन्तःपुरगतः, खेलन्सुखसुधाम्बुधौ ॥१५७॥ युग्मम् ॥ हस्तायातमिदं राज्यमात्मसात्कृत्य साम्प्रतम् । क्ष्मानाथममुमुच्छेद्य, स्यामेवाहं महीपतिः ॥ १५८ ॥ विमृश्यैवं हृदि तदा, जयामात्यो दुराशयः । दानमानादिना सैन्यं, सर्वमात्मीयमातनोत् ॥ १५९ ॥ कुतश्चित्सिद्धपुरुषादाप्तया सिद्धविद्यया । निद्रामवस्वापिनीं च, सोऽदात्तस्मै महीभुजे ॥ १६० ॥ तया प्रनष्टचैतन्यं, तं पल्यङ्कस्थमेव सः । आप्तैर्भृत्यैरथोत्पाट्य, दूराटव्याममूमुचत्॥१६१॥यन्नृशंसः स तं क्ष्मापं, नूनं नामारयत्तदा। पवित्रमं तत्र तत्प्राच्यपुण्यमेवान्तराऽभवत् ॥१६२॥ इतश्चाऽनन्यसामान्यां, प्राप्य तां राज्यसम्पदम् । तेन पापीयसोन्मत्तचित्तेन जयभूभुजा ॥ १६३ ॥ चक्रे महासतीमेकां, हित्वा श्रृङ्गारसुन्दरीम् । रत्नपालनृपाऽशेपान्तःपुरीशीलविप्लवः ॥ १६४ ॥ युग्मम् ॥ तेन कर्मश्वपाकेन, सापि श्रृङ्गारसुन्दरी । प्रार्थ्यते स्म प्रतिदिनं, विविधैश्चाटुभाषितैः ॥ १६५ ॥ परं शुद्धान्वयोद्भूता, दृढसत्त्वाशया सती । तस्य नैव्यदधचाटुवचांसि श्रवणेऽपि सा ॥ १६६ ॥ रागान्धस्त्यक्तमर्यादः, स ततोऽनुदिनं क्रुधा । पञ्चशत्या कशाघातैस्ताडयामास तां सतीम् ॥ १६७ ॥ शिरीषसुकुमाराङ्गी, निकृष्टहृदयः स ताम् । दृढैर्ज्वलद्भिः सन्दंशैस्त्रोटयामास चासकृत् ॥ १६८ ॥ तस्याश्चैवं हठारूढः, स शठः स्वेष्टसिद्धये । नैकप्रकारा विदधे, मासमेकं कदर्थनाः ॥ १६९ ॥ प्राणेभ्योऽप्यधिकं शीलं,

१ विडालाधीनम् । २ 'मर्त्यैः' इत्यपि । ३ अपिवत् । प्रियवचनानि नाऽशृणोदित्यर्थः । ४ 'भूरिशः' इत्यपि ।

मन्यमाना परं न सा । मनसाप्यस्खलच्छुद्धसदाचाराध्वनो मनाक् ॥ १७० ॥ इतश्च कुशलः कश्चिद्वयस्यस्तस्य भूभुजः । अनुशास्तिमिति प्रादात्,परिणामहितां रहः ॥ १७१ ॥ शुद्धशीलानुभावेन, महासत्यो महीपते ! । स्थलयन्त्याशु जलधिं, स्थलं जलधयन्ति च ॥ १७२ ॥ ज्वलनं जलयन्त्येता, जलं ज्वलनयन्ति च । शैलं वल्मीकयन्त्याशु, वल्मीकं शैलयन्ति च ॥ १७३ ॥ रक्षोयक्षोरगव्याघ्रान्, दमयन्ति दुरात्मनः । स्वचक्रं परचक्रं च, स्तम्भन्त्यागच्छदेव वा ॥१७४॥ कुपिताः कर्हिचिच्चैताः, शापदानेन सत्वरम् । सपुत्रभ्रातृकं भूपमपि कुर्वन्ति भस्मसात् ॥ १७५ ॥ स्वामिन्निहार्थे दृष्टान्तं, शृणु रत्नपुरे पुरे । सार्थेशधनसारस्य, धनश्रीः समभूत्प्रिया ॥१७६॥ तामन्यदा गवाक्षस्थां, रूपसौभाग्यशालिनीम् । विद्याभृन्नृपतिः पापप्रकृतिः कश्चिदैक्षत ॥१७७॥ रागान्धः प्रार्थयामास, स तां चाटुशतैस्तदा । वचस्तस्य सती सा तु, नान्वमंस्त मनागपि ॥ १७८ ॥ स्मरापस्मारतो मूढमना विद्यावलेन सः । अथ तस्याः सदाचारध्वंसाय यतते यदा ॥ १७९ ॥ रे पाप्मन्! पुत्र सप्ताङ्गराज्यश्रीक्षयमाप्नुहि । इति शापमदात्तस्मै, तदा सा कुपिता सती ॥ १८० ॥ स विद्याभृदथ प्रोचे, सम्प्रत्यस्ति दिनं परम् । रात्रावेत्य हरिष्ये त्वां, यद्भाव्यं तद्भवत्विति ॥ १८१ ॥ साऽपीत्याख्यन्मदुक्तोऽद्य, रविरस्तं प्रयास्यति । दुष्टाकूतोऽथ विद्याभृत्,स यावत्स्वपुरं ययौ ॥१८२॥ तावदुत्पन्नहृच्छूलस्तस्याकस्मान्मृतः सुतः । अश्वेभं च मृतं तावत्किञ्चित्किञ्चिद्गतं क्वचित्॥१८३॥ धनधान्यमणिस्वर्णरूप्यकुप्यादिवस्तुभिः।पूर्णं वज्राग्निना तावत् , तद्वेश्म ज्वलितं द्रुतम् ॥ १८४ ॥ अकस्मात्केचिदज्ञाताश्चतुरङ्गबलान्विताः । तावत्सपत्नास्तत्रेयुर्निःसपत्नपराक्रमाः ॥ १८५ ॥ देशदुर्गादि तैस्तस्य, प्रसह्यागृह्यताऽखिलम् । एवं दिनत्रयेणाऽभूज्जनमात्रं नृपोऽपि सः ॥ १८६ ॥ दुःखादुपरि हा! दुःखं, किमेतन्मे नवं

नवम् । विषादाद्विस्मयाच्चेत्थं, स यावद्ध्यायति क्षणम् ॥ १८७ ॥ तावत्खेटस्तमाहैकः, स्वामिन्नाश्चर्यमद्भुतम् । दृष्टं नन्दीश्वरद्वीपादद्याऽत्रागच्छता मया ॥ १८८ ॥ पुरे रत्नपुरे नाऽस्तं, रविर्यात्यादिनत्रयात् । राज्ञा तदर्थं कार्यन्ते, शान्तिकादीनि सर्वतः ॥ १८९ ॥ तच्छ्रुत्वा चकितश्चित्ते, सोऽध्यासीदिति खेटराट् । वचसैषा ह्यभूत्तस्याः, सर्वाऽप्याश्चर्यसन्ततिः ॥ १९० ॥ हा ! हा ! विरूपमाचीर्णं, दुर्वृत्तेन मया तदा । महानुभावा यद्दर्पात्कोपिता सा महासती ॥ १९१ ॥ तत्तां तत्र पुरे गत्वा, क्षमयामि महासतीम् । भावी वज्राग्निवच्छापो, दुःसहोऽद्यापि सोऽन्यथा ॥ १९२ ॥ अथ तत्र पुरे गत्वा, पतित्वा पादयोश्च सः । प्रादुष्कुर्वन् स्वदुर्वृत्तं, पश्चात्तापावतप्तहृत् ॥ १९३ ॥ नृपपौरजनाध्यक्षं, क्षमयामास तां सतीम् । ततस्तदुक्तस्तरणिः, समयेऽस्तं समासदत् ॥ १९४ ॥ युग्मम् ॥ तयाऽनुनीतया शापान्मुक्तः सोऽथ नभश्चरः । तानरातीन् क्रमाज्जित्वा, भेजे राज्यश्रियं पुनः ॥ १९५ ॥ इति सत्योऽनुभावाढ्याः, कुशलैः कुशलार्थिभिः । आराध्यन्ते सदा स्वामिन् !, विराध्यन्ते तु न क्वचित् ॥ १९६ ॥ हिताऽनुशास्तिं सुहृदस्तां श्रुत्वा जयभूपतिः । अभूच्छृङ्गारसुदर्यां, प्रशान्तहृदयो मनाक् ॥ १९७ ॥ तादृग्विडम्बनातोऽथ, विमुक्ता जयभूभुजा । आचामाम्लतपस्तेनेऽनुदिनं सा पतिव्रता ॥ १९८ ॥ पक्षमासोपवासाद्यं, सा सदाऽप्यन्तरान्तरा । तप्यते स्म तपस्तीव्रं, निरपेक्षा वपुष्यपि ॥ १९९ ॥ स्नानाऽङ्गरागसंस्कारसद्वस्त्राऽलङ्कृतीः सदा । वर्जयन्ती जिनेन्द्राऽर्चानिरता भुवि साऽस्वपीत् ॥ २०० ॥ भर्तुर्वियोगं राज्यश्रीभ्रंशं चाऽतीव दुःखदम् । स्मरन्ती हृदि सा मर्त्तुमीहते स्म महासती ॥ २०१ ॥ मेलिष्यति तव प्रेयान्, राज्यमाप्स्यति चाऽचिरात् । इति नैमित्तिकोक्त्या तु, साकाङ्क्षा प्राणिति स्म सा ॥ २०२ ॥ इतश्च यस्यां वेलायां, रत्नपालः

स सुप्तवान् । तस्यां प्रबुद्धः परितो, महारण्यमलोकयत् ॥ २०३ ॥ मर्त्यप्रचाररहितं, गहनं विविधद्रुमैः । अथ श्वापदसङ्कीर्णं, तद्वीक्ष्यैवमचिन्तयत् ॥ २०४ ॥ पश्याम्येतं किमु स्वप्नमिन्द्रजालमिदं नु वा? । कश्चिद्वा सम्प्रति मतिव्यामोहोऽयं ममाऽपतत् ॥ २०५ ॥ यन्त्रानामङ्गलातोद्यबन्दिस्वनमनोहरः । स्वःसद्मेव ममावासः, सर्वेन्द्रियसुखः क्व सः ? ॥ २०६ ॥ क्वैतत्स्थानं यमस्थानमिवाऽत्यन्तभयावहम्? । काकोलोलूकभल्लूकास्तोककोलाहलाऽऽकुलम् ॥ २०७ ॥ राज्यलोभेन वा जाने, सचिवेन दुरात्मना । ईदृग्दुःखमहाम्भोधौ, विश्वस्तः पातितोऽस्म्यहम् ॥ २०८ ॥ सुप्तस्योत्सङ्गमारुह्य, ममाद्यामोटितं गलम् । तेन कृत्ता वरत्रा वा, हा! क्षिप्त्वा मां महाऽवटे ॥ २०९ ॥ भक्ता मम क्रमायाता, दानसम्मानसत्कृताः । राज्यप्रधानपुरुषाः, कथं तेनात्मसात्कृताः? ॥ २१० ॥ सदा सन्तोष्यमाणा वा, द्रविणैर्मुखमार्गितैः । अङ्गरक्षानियुक्तास्ते, कथं विघटिता मयि ? ॥ २११ ॥ सर्वो वाऽनुगतो लोकः, पुंसः सम्पदमीयुषः । तस्यैव त्वापदापत्तौ, सम्बन्ध्यपि भवेत्परः ॥ २१२ ॥ यदुक्तम्—

"सम्पदि परोऽपि निजतां, निजोऽपि परतामुपैति विपदि जनः ।
ताराभिर्व्रियते निशि, रश्मिभिरपि मुच्यतेऽह्नि शशी" ॥ १ ॥

भाग्यभ्रष्टस्य वा पुंसो, भक्तिमन्तोऽनुजीविनः । किं विदध्युरिवाऽन्धस्य, ज्योतिष्मन्तोऽर्यमादयः? ॥ २१३ ॥ प्राच्यकर्माऽनुभावेन, सम्पदो विपदोऽपि वा । सम्पद्यन्ते स्वयं पुंसां, न त्वन्यस्माद्यदुच्यते ॥ २१४ ॥

"सुखस्य दुःखस्य न कोऽपि दाता, परो ददातीति कुबुद्धिरेषा ।
पुरा कृतं कर्म तदेव भुज्यते, त्वं जीव! हे निस्तर यत्त्वया कृतम् ॥ १ ॥

तथा—

"सुखदुःखानां कर्त्ता, हर्त्ता न च कोऽपि कस्यचिज्जन्तोः । इति चिन्तय सद्बुद्ध्या, पुराकृतं भुज्यते कर्म" ॥ १ ॥
सम्प्रत्यभाग्योपनतां, तद्भुञ्जे दुर्दशामिमाम् । पश्चात्कर्मानुकूल्ये तु, सर्वं साध्वेव भावि मे ॥ २१५ ॥ यतः—
"छिन्नोऽपि रोहति तरुः, क्षीणोप्युपचीयते पुनश्चन्द्रः । इति विमृशन्तः सन्तः, परितप्यन्ते न विधुरेऽपि"॥ १ ॥
प्राच्यतादृक्सुखाभोगे, दुःखापाते च तादृशे । आसीत्सत्त्वभृतस्तस्य, समानैव मुखच्छविः ॥ २१६ ॥ यदुक्तम्—
"उत्सवव्यसनयोः प्रभुर्विधिर्विक्रियासु महतामनीश्वरः । पश्यतामुदयमेति यादृशस्तादृशस्तरणिरस्तमीयते" ॥ १ ॥
अथोत्थाय स पल्यङ्काद्वीक्षमाणोऽभितो वनम् । आलोक्यैकं महाशैलं, तत्रारोहच्छनैः शनैः ॥ २१७ ॥ स तत्र कौतुकाक्षिप्तः, पश्यन्नथ वनश्रियम् । नरं निबद्धमैक्षिष्ट, द्रुमूले सुन्दराकृतिम् ॥ २१८ ॥ तद्बन्धान् कृपया च्छित्वा, सोऽथाप्राक्षीत्तमानतम् । कोऽसीत्थं केन बद्धश्च, कस्मादिति वद स्फुटम् ॥ २१९ ॥ सोऽप्येवमाख्यद्वैताढ्ये, पुरे गगनवल्लभे । वल्लभो नाम राजास्ते, विद्याभृद्बलभिद्बलः ॥ २२० ॥ अहं तदङ्गजन्माऽस्मि, नाम्ना हेमाङ्गदः सखे! । नन्दीश्वरे जिनान्नन्तुं [1]यानभूवं प्रियायुतः ॥ २२१ ॥ खेटोऽत्र राक्षसीविद्याबलोन्मत्तोऽमिलत्पथि । प्रियामहार्षीत्प्रसभं, मां

[1] यान् गच्छन्, अभूवं आसम् ।

निबध्याऽधुनैव सः ॥ २२२ ॥ प्राणप्रद ! जगद्वीर !, तत्साहाय्यं सृजाऽधुना । जित्वाऽरातिं तमाप्नोमि, यथा प्राणेश्वरीमहम् ॥ २२३ ॥ इत्थमर्थयते यावद्रत्नपालं स खेचरः । तावदागाद्यमाकृष्ट, इव तत्र स राक्षसः ॥ २२४ ॥ परस्त्रीलुब्ध ! पापिष्ठ !, स्मर स्वाऽभीष्टदैवतम् । शास्ता दुरात्मनामद्य, रत्नपालस्तवाऽमिलत् ॥ २२५ ॥ इत्युक्त्वा योधितः खड्गाखड्गि स क्ष्माभुजा चिरम् । पराजितश्च भीतात्मा, जीवग्राहं स नष्टवान् ॥ २२६ ॥ इत्थं हेमाङ्गदस्यार्थं, गिराऽनुक्त्वैव सोऽकरोत् । ब्रुवते हि फले नैव, साधवः सोपयोगिताम् ॥ २२७ ॥ हृष्टो हेमाङ्गदोऽथाप्य, पत्नीमित्यब्रवीन्नृपम् । किं कुर्वेऽद्य तवाभीष्टं, निर्निमित्तोपकारिणः ॥ २२८ ॥ तदाख्यद्रत्नपालोऽपि, न मे किञ्चिद्विलोक्यते । सप्रियः स्वपुरे गत्वा, चिरं भुङ्क्ष्व सुखं सखे ! ॥ २२९ ॥ यदुक्तम्—

"उपकृत्योपकार्येषु, ये भवन्त्यर्थिनः पुनः । तेषु मन्ये मनुष्यत्वं, विधेर्वार्द्धकविक्रिया" ॥ १ ॥

नृपायाऽनिच्छतेऽप्येवं, कृतज्ञः स खगो बलात् । औषधीवलयं सर्वविषावेगाऽपहं ददौ ॥२३०॥ अथानुज्ञाप्य स नृपं, सप्रियः स्वपुरेऽगमत् । क्ष्मापालः पुनरुत्तीर्णः, शैलशृङ्गाच्छनैः शनैः ॥२३१॥ मूलस्थानपुरेऽथाप्तो, दीनानाथकुटीस्थितम् । नृपो वैदेशिकश्राद्धं, भृशं ग्लानं व्यलोकत ॥२३२॥ दिनत्रयं नृपेणैष, करुणार्द्रहृदा तदा । शुश्रूषितो धर्मबुद्ध्या, नानापथ्यौषधादिभिः ॥२३३॥ स कारिताऽखिलप्रान्तपुण्यकृत्योऽथ भूभुजा । समाहितमना मृत्वा, दिवि देवो महानभूत्॥२३४॥ रत्नपालोऽथ नृपतिः, प्रभाते प्रविशन्पुरे । पटहोद्घोषणामेवं, श्रुतवान् राजवर्त्मनि ॥ २३५ ॥ भो मन्त्रतन्त्रादिविदो !

१ 'अवाप्य' इत्यपि ।

वलवाहनभूभुजः । अद्य रत्नवती पुत्री, दष्टा दुष्टाहिना निशि ॥ २३६ ॥ कृतैर्नानाप्रतीकारैरप्यजातगुणा च सा । निश्चेष्टा मरणावस्थां, साम्प्रतं समुपेयुषी ॥ २३७ ॥ यः कश्चिज्जीवयत्येतां, मन्त्रतन्त्रौषधीवलैः । तस्मै राज्यार्द्धसंयुक्तामेतां दत्ते स भूपतिः ॥ २३८ ॥ तदैवागण्यकारुण्यनैपुण्यान्निस्पृहोऽपि सः । जगाम पटहस्पर्शद्वारेण क्ष्मापसंसदि ॥ २३९ ॥ घटते कश्चिदाम्नायः, शुद्धोऽस्मिन्निःसमाकृतौ । इति ध्यायन्नृपस्तस्मै, सादरं तामदीदृशत् ॥ २४० ॥ आडम्बराणि पूज्यन्ते, स्त्रीषु राजकुलेषु च । विमृश्यैवं च तत्र प्राक्, स नानाडम्बरं व्यधात् ॥ २४१ ॥ तदौषधीरसेनाथ, विषावेगं निरस्य सः । तां सद्यो जीवयामास, हृदि हृष्टश्च तत्पिता ॥ २४२ ॥ न ज्ञायते कुलाद्यस्येतीपद् हृदि विषादभाग् । वाग्बद्धोऽथ ददौ तस्मै, स राज्यार्द्धयुतां कनीम् ॥ २४३ ॥ पुत्रो विनयपालस्य, रत्नपालः पराक्रमी । नूनं राजाधिराजोऽयं, केनचिद्धेतुनैककः ॥ २४४ ॥ भट्टैरित्युपलक्ष्योक्ते, वलवाहनभूमिभुग् । स्थाने पुत्री प्रदत्तेति, सुतरां मुमुदे हृदि ॥ २४५ ॥ रत्नवत्या समं पत्न्या, विलसन्पञ्चधा सुखम् । अप्यासातुलराज्यश्री, रत्नपालोऽथ भूपतिः ॥ २४६ ॥ विश्वासद्रोहमाचीर्णं, सचिवेन दुरात्मना । तमुत्कीर्णमिव स्वान्ते, व्यस्मार्षीन्नहि कर्हिचित् ॥ २४७ ॥ युग्मम् ॥ यदुक्तम्—

"मृगेण दत्तां किं लत्तां, विस्मरेज्जातु केसरी । यत्तां स नूनं समये, सव्याजां वालयिष्यति" ॥ १ ॥

इतश्चान्यूनसैन्येन, सहितः समये नृपः । तममात्यद्रुवं जेतुं, चचाल स्वपुरं प्रति ॥ २४८ ॥ अन्यदाऽध्वनि कान्तारे, सैन्यमावास्य स स्थितः । निशीथे दूरतोऽश्रौषीद्दिव्यगीतध्वनिं क्वचित् ॥ २४९ ॥ कृपाणपाणिरेकाकी, तत्रागात्कौतुकेन सः । प्रासादमेकं चाद्राक्षीत्तुङ्गशृङ्गं सुधोज्वलम् ॥ २५० ॥ तत्र प्रविशति क्ष्मापः, स यावत्सत्त्वसेवधिः । तावत्सखीभिः

सहिता, काचिद्विद्याभृतः कनी ॥ २५१ ॥ जिनाग्रे गीतनृत्यादीन्, विधाय विविधोत्सवान् । रम्यं विमानं चारुह्य, स्वस्थानमगमद् द्रुतम् ॥ २५२ ॥ युग्मम् ॥ अथ प्रविष्टः प्रासादे, प्रतिमां प्रथमार्हतः । प्रणम्य परितो भ्राम्यन्, दिदृक्षू रमणीयताम् ॥ २५३ ॥ सौभाग्यमञ्जरीनामाङ्कितं निपतितं पुरः । तत्र दिव्यं स वलयं, वीक्ष्य क्ष्मापतिरग्रहीत् ॥ २५४ ॥ युग्मम् ॥ प्रातरागत्य कटकं, पुरतश्चलितोऽथ सः । क्रमेणाप्तः स्वराज्याप्तिसोत्कण्ठः स्वपुरान्तिकम् ॥ २५५ ॥ अथ तं राज्यमादातुमागच्छन्तं महौजसम् । श्रुत्वा विषादमापन्नो, जयराजो व्यचिन्तयत् ॥ २५६ ॥ प्रौढिमास्पस्य मे कर्त्ता, किं वराकोऽयमेककः । मयेति बुद्ध्या यज्जीवन्, मोचितोऽयं तदा वने ॥ २५७ ॥ मन्ये दुर्दैवनुन्नेन, तन्मयस्र कुधियस्र हहा ! । विपुच्छीकृत्य कृष्णाहिर्मुच्यते स स्वमृत्यवे ॥ २५८ ॥ यदुक्तं राजनीतौ—

"विराध्यते न नीतिज्ञैर्महानात्महिताऽर्थिभिः । कर्हिचित्स विराद्धश्च, तर्हि जीवन् न मुच्यते" ॥ १ ॥

अन्यत्राप्युक्तम्—

"उत्तिष्ठन्तो निवार्यन्ते, सुखेन व्याधिशत्रवः । भवन्त्युपायासाध्यास्ते, बद्धमूलास्तु मृत्यवे" ॥ १ ॥

मुग्धोचितेन वातीतशोचनेनाऽमुना कृतम् । किन्त्वद्य सम्मुखीभूय, म्रिये वा मारयाम्यमुम् ॥ २५९ ॥ स्वर्गाप्तिः स्वमृतौ शौर्य्याद्राज्याप्तिश्चाऽरिमारणे । शूराणां युधि तन्नूनं, मोदकौ हस्तयोर्द्वयोः ॥ २६० ॥ अथेत्थं धैर्यमालम्ब्य, स चित्ते सचिवाऽधमः । राज्ञः सम्मुखमागत्य, ससैन्यः समरेऽमिलत् ॥ २६१ ॥ खड्गैः कुन्तैः शरव्रातैः, गदाभिर्मुद्गरैस्तथा । तत्र क्रूराशयाः शूरा, मिथो युयुधिरे चिरम् ॥ २६२ ॥ रत्नपालनृपालस्य, सैन्येनातिबलीयसा । जयामात्याधम-

स्याथ, सर्वं सैन्यमभज्यत ॥ २६३ ॥ पलायमानं तद्वीक्ष्य, तदा क्रुद्धेन मन्त्रिणा । मुक्तावस्वापिनी निद्रा, नृपसैन्ये प्रसृत्वरी ॥ २६४ ॥ तया प्रनष्टचैतन्यं, नृपतेर्निखिलं वलम् । नाज्ञासीदथ शस्त्राणि, हन्त हस्ताद्गलन्त्यपि ॥ २६५ ॥ सर्वकृत्यालसं वीक्ष्य, ज्येष्ठमासीव तत्तदा । पतितः सुमहाकष्टे, व्यषीदत्स नृपो हृदि ॥ २६६ ॥ अथ वैदेशिकग्लानश्राद्धो योऽभूत्सुरः पुरा । प्रत्युक्ताऽवधिरैक्षिष्ट, स तं पतितमापदि ॥ २६७ ॥ तदा प्रत्युपकाराय, स तत्रागत्य कृत्यवित् । हृत्वावस्वापिनीं राज्ञः, स्वस्थीचक्रेऽखिलं वलम् ॥ २६८ ॥ अथ तत्सुरसांनिध्योद्भुताऽद्भुतवलं वलम् । प्रावर्त्तत पुनर्योद्धुं, सोत्साहं सह शत्रुभिः ॥ २६९ ॥ स्वस्थीभूते तदा सैन्ये, रत्नपालस्य भूभुजः । क्षीणविद्यावलो मन्त्री, निराशोऽभूज्जयश्रि-याम् ॥ २७० ॥ दुष्कर्मोष्मविलीनात्मशक्तिर्भक्तिमदर्शयन् । प्राप्तस्तत्र विपद्याऽथ, स पापः सप्तमावनौ ॥ २७१ ॥ पुष्पवृष्टिं विदधतां, नृपमूर्ध्नि दिवौकसाम् । धर्मे जयः क्षयः पाप, इत्यभूवन् गिरश्च खे ॥ २७२ ॥ प्रादुर्भूयाऽथ देवोऽवक्, त्वया शुश्रूषितस्तदा । ग्लानो वैदेशिकश्राद्धः, समाहितमना मृतः ॥ २७३ ॥ देवभूयं गतः सोऽहं, तवायातेऽद्य सङ्कटे । आगां जयश्रियं दातुं, हृत्वावस्वापिनीं सखे! ॥ २७४ ॥ इत्युक्त्वा स सुरः स्वर्णरत्नकोटीः परःशताः । रत्नपालनृपस्याग्रे, वृष्ट्वा च दिवि जग्मिवान् ॥ २७५ ॥ विजित्याऽथ जयाऽमात्यं, पौरक्लृप्तैर्महामहैः । स्वराज्यपुर्यामविशत्स प्रियामिलनोत्सुकः ॥ २७६ ॥ हृद्यैर्भोज्यैर्विधायाऽथ, पारणं पत्युराज्ञया । चक्रे सर्वाङ्गशृङ्गारं, हृष्टा शृङ्गारसुन्दरी ॥ २७७ ॥ तास्ताः स्वशीलरक्षार्थं, श्रुत्वा सोढाः कदर्थनाः । नृपश्रेष्ठश्च मुदितः, पट्टराज्ञीमिमां व्यधात् ॥ २७८ ॥ अथ पालयतो राज्यं, तस्य भूभर्त्तुरन्यदा । इति व्यजिज्ञपन्प्रातः, केचिदेत्य वनेचराः ॥ २७९ ॥ गिरिप्रायवपुर्वन्यः, कुतश्चि-

ज्ञात्यकुञ्जरः । प्राप्तः प्रणुन्नस्ते पुण्यैरुद्याने राजकुञ्जर ! ॥ २८० ॥ कौतुकेन वशीकर्त्तुमथ तं वन्यहस्तिनम् । कुशलो गजशिक्षायां, तत्र प्राप्तो नृपः स्वयम् ॥ २८१ ॥ पुञ्जीकृत्योत्तरीयं प्राग्, गजस्याग्रेऽथ सोऽक्षिपत् । क्रोधोद्बोधान्मदोन्मत्तः, सोऽव्यात्सीत्तद्रदैर्मुहुः ॥ २८२ ॥ पृष्ठभागेऽथ स गजं, प्राहरद्दृढमुष्टिना । वलमानं भ्रमंश्चक्रभ्रमेणाऽखेदयच्च तम् ॥ २८३ ॥ सुचिरं खेदयित्वैवं, वशीकृत्य च भृत्यवत् । उत्प्लुत्य द्रुतमारूढो, यावदेतं स भूपतिः ॥ २८४ ॥ स तावद्वन्यकरटी, प्रकटीकृतकैतवः । अकस्मादुत्पपातोच्चैः, पक्षिराज इवाम्बरे ॥ २८५ ॥ चक्ररेखा इव नदीर्महाऽद्रीन्मूढकानिव । कीटिकानगराणीव, महान्ति नगराणि च ॥ २८६ ॥ अथ राजा व्रजन् व्योम्नि, सुदूरत्वादधो भुवि । सकौतुकं वीक्षमाणस्त्यक्तभीति र्व्यभावयत् ॥ २८७ ॥ युग्मम् ॥ मित्रेणाऽनेन विविधाश्चर्यां दर्शयितुं भुवम् । हृतोऽद्याऽहं शत्रुणा वा, क्वचित्क्षेप्तुं महापदि ॥ २८८ ॥ इति संशीतिमापन्नस्तटाके महति क्वचित् । हस्तिस्कन्धाददाज्झम्पां, स तीर्त्वा चागमत्तटम् ॥ २८९ ॥ तत्राऽथ दिव्यप्रासादे, प्रविष्टः पृथिवीपतिः । तृतीयभूमावैक्षिष्ट, भस्मपुञ्जौ महत्तरौ ॥ २९० ॥ तयोरदूरतो नागदन्तके चाऽवलम्बितम् । रसेन पूर्णं प्रैक्षिष्ट, तुम्बकं सुमहन्नृपः ॥ २९१ ॥ गृह्णानेऽथ नृपे तत्र, तुम्बकं तत्ससम्भ्रमम् । रसविन्दोर्निपतनाज्जाते दिव्यस्त्रियौ च ते ॥ २९२ ॥ विस्मितोऽथ नृपोऽप्राक्षीद्दिव्यरूपे नु के युवाम् ? । असादकस्मादुद्भूते, भस्मपुञ्जद्वयादुभे ॥ २९३ ॥ नृपं सप्रेम पश्यन्त्यौ, ते अप्येवमवोचताम् । उभे महाबलस्यावां, सुते विद्याभृदीशितुः ॥ २९४ ॥ पत्रवल्लीमोहवल्लीनाम्न्यौ प्राप्ते च यौवनम् । खेटेनोद्वोढुकामेन, मातङ्गेन महौजसा ॥ २९५ ॥ आवां परेद्युर्हृत्वाऽत्र, मुक्ते विद्याकृते गृहे । ईर्ष्यालुचित्तश्च यदा, कुत्रचित्स यियासति ॥ २९६ ॥ तदावां विद्यया भस्मरा-

शीकृत्य प्रयाति सः । अनेनोज्जीवयत्याशु, सरसेनागतः पुनः ॥ २९७ ॥ प्राप्तोऽस्यद्याऽत्र नौ पुण्यैर्वरं तस्मिन्गते
क्वचित् । दुरात्मा स तु मा ज्ञासीत्सुन्दर! त्वामिहागतम् ॥ २९८ ॥ इति ब्रुवाणयोरेव तयोर्विद्यावलोद्धतः । तत्रागमत्स
मातङ्गस्तत्पाणिग्रहणोत्सुकः ॥ २९९ ॥ अद्याऽस्मदर्थं पुंरत्नमीदृग् हन्त हनिष्यति । अयं दुरात्मेति भृशं, विषीदन्मनसो-
स्तयोः ॥ ३०० ॥ मामजानन्तमेवैतमायान्तं हन्मि साम्प्रतम् । क्षत्राणां वा नैष धर्मस्तत्पूर्वं वादयाम्यमुम् ॥ ३०१ ॥ नृपे
च चिन्तयत्येवं, तत्राकस्मादुपेत्य सः । करेणोच्छाल्य दशनैर्धृत्वा तमवधीद्गजः ॥ ३०२ ॥ त्रिभिर्विशेषकम् ॥ नभोगामी
गजः कोऽयं, किमर्थं चामुनाऽधुना । हतोऽयमिति साश्चर्यहर्षोऽभूत्स नृपस्तदा ॥ ३०३ ॥ इतश्च सुविषण्णात्मा, महा-
वाहुर्महाबलः । भ्रमन्स्वपुत्रीशुद्ध्यर्थं, तत्र सौधे समीयिवान् ॥ ३०४ ॥ नृपं च सकनीद्वन्द्वं, तत्रालोक्य मुदेत्यवग् ।
प्रोक्तं महानुभाव! प्रागासीन्नैमित्तिकेन नः ॥ ३०५ ॥ यन्मातङ्गनभोगेन, विद्यया भस्मसात्कृतम् । कन्याद्वन्द्वमिदं
दिव्यं, जीवयिष्यति यः पुमान् ॥ ३०६ ॥ यत्सांनिध्याय मातङ्गं, गजश्चैत्य हनिष्यति । स भावी ते सुताभर्त्ता, सत्यं
सञ्जातमद्य तत् ॥ ३०७ ॥ अत्रान्तरे महोराशिरिवाविर्भूय सत्वरम् । कश्चित्सुपर्वा श्रीरत्नपालं सस्नेहमित्यवग् ॥ ३०८ ॥
तदा कृतं त्वया राजन्नुपकारं स्मरन्नहम् । जयामात्ययुधि प्राप्तस्तत्र दातुं जयश्रियम् ॥ ३०९ ॥ कन्याद्वयास्यै त्वाम-
द्याऽपाहरं द्विपरूपभाक् । दुरात्मानं च मातङ्गनभोगं हेलयाऽहनम् ॥३१०॥ एतद्दिव्यरसापूर्णं,सुप्रापं सुकृतात्मभिः। तुम्बकं
चाधुना भ्रातर्गृहाणानुगृहाण माम् ॥ ३११ ॥ चतुर्विंशतिवर्षाणि, कन्दमूलफलादिभुक् । प्रत्यहं प्रहरद्वन्द्वं, जपन्मन्त्र-
मधोमुखः ॥ ३१२ ॥ होमं च तन्वन्मातङ्गविद्याभृद्दुष्करक्रियः । नागाधिनेतुः सन्तुष्टात्, प्राप दिव्यममुं रसम् ॥३१३॥

युग्मम् ॥ अस्यैकबिन्दुना स्पृष्टा, लोहस्य पलकोटयः । स्वर्णीभवन्ति शाम्यन्ति, दुःसाध्या व्याधयस्तथा ॥ ३१४ ॥ अस्य स्पर्शाद्विलीयन्ते, भूतप्रेताद्युपद्रवाः । व्यापार्यमाणोऽप्यनिशं, न च न्यूनीभवत्ययम् ॥ ३१५ ॥ अनेन च जगज्जैत्रमहिम्ना तिलके कृते । अजय्यः स्यान्नरोऽवश्यं, युधि देवासुरैरपि ॥ ३१६ ॥ अथान्यदपि दुःसाधं, सर्वमेतेन सिद्ध्यति । अतिशेते ततश्चिन्तारत्नादीन्यप्ययं ध्रुवम् ॥ ३१७ ॥ कार्ये त्वयाहमुत्पन्ने, स्मरणीयः पुनः सखे ! । इत्युक्त्वा स तिरोभूतः, सुरो विद्युत्प्रकाशवत् ॥ ३१८ ॥ सांनिध्येन सुरस्यास्य, विस्मितोऽथ महाबलः । विमाने नृपमारोप्य, वैताढ्ये स्वपुरेऽनयत् ॥ ३१९ ॥ तत्र स्वपुण्योपनते, ते कन्ये सुन्दराकृती । परिणिन्ये स भूजानिर्महाबलकृतैर्महैः ॥ ३२० ॥ महाबलाद्यैर्विद्याभृद्भीरैर्विनयवासनैः । तत्र सत्क्रियमाणश्च, दिनान्यस्थात्स कत्यपि ॥ ३२१ ॥ इतश्च तत्रैव गिरौ, पुरे गगनवल्लभे । आस्ते वल्लभभूभर्त्तुर्वली हेमाङ्गदः सुतः ॥ ३२२ ॥ अन्वर्थसंज्ञा दुहिता, पुनः सौभाग्यमञ्जरी । कलाकलापकुशला, क्रमाद्यौवनमीयुषी ॥ ३२३ ॥ पुण्यैः प्रसन्नमनसा, कुलदेव्याऽन्यदा ददे । दिव्यं रत्नमयं तस्यै, वलयं सर्वकामदम् ॥ ३२४ ॥ समं सखीभिः सानन्दं, तस्याश्च जिनसद्मनि । नृत्यन्त्या निशि तद्दैवात्प्रकोष्ठाद्गलितं क्वचित् ॥ ३२५ ॥ अबालप्रकृतिर्बाला, ततः प्रभृति खेदभाग् । हित्वा सा सरसाहारं, फलाहारा तपस्यति ॥ ३२६ ॥ पृष्टः सौवसुतादुःखदुःखितेनाऽथ भूभुजा । इत्यष्टाङ्गनिमित्तज्ञः, स्पष्टमाचष्ट कश्चन ॥ ३२७ ॥ राजन् ! सौभाग्यमञ्जर्याः, स्वयंवरणमण्डपे । नूनं वलयापहर्त्ता, स्वयमेष्यति सत्पुमान् ॥ ३२८ ॥ रूपेणातिस्मरश्चैतां, स तत्र परिणेष्यति । हृष्टोऽथाऽमण्डयत्तस्याः, स्वयंवृति-

१ 'दुःसाधा' इत्यपि । २ स्वकीय । 'हृष्टोऽसौ च' इत्यपि ।

महं पिता ॥ ३२९ ॥ दूताहूताश्च वहवस्तत्रेयुः खेचरेश्वराः । महावलाद्यानुगतो, रत्नपालोऽपि कौतुकात् ॥ ३३० ॥ सुरूपान्सदलङ्कारांस्तत्रासीनान्नभश्चरान् । विलोकयन्ती प्रत्येकमेत्य सौभाग्यमञ्जरी ॥ ३३१ ॥ वव्रे वीक्ष्य स्ववलयाङ्कितहस्तं नृपं तदा । जहृषुश्चोपलक्ष्यैनं, खेटा हेमाङ्गदादयः ॥ ३३२ ॥ युग्मम् ॥ अथान्ये खेचराः सर्वे, भूचरेण वृतामिमाम् । वीक्ष्य विध्यातवदना, अन्योन्यं व्यमृशन्निदम् ॥ ३३३ ॥ दोष्मतामियतां विद्याभृतां चेदद्य पश्यताम् । परिणेष्यत्ययं कन्यां, तज्जीवन्तोऽपि ते मृताः ॥ ३३४ ॥ ततस्ते स्वपराभूतिप्रोद्भूतप्रवलक्रुधः । ससैन्या योद्धुमुत्तस्थुः, सर्वे सन्नह्य सत्वरम् ॥ ३३५ ॥ महावलैर्वल्लभाद्यैः, खेटवीरैर्वृतस्तदा । तद्दिव्यरसजातौजा, युध्यजय्यः सुरैरपि ॥ ३३६ ॥ शस्त्राशस्त्रि चिरं युद्ध्वा, रत्नपालः क्षमापतिः । हेलया तान् द्विषोऽजैषीत्कन्यामादातुमुद्यतान् ॥ ३३७ ॥ नराणां निर्जराणां च, तदेत्यासन् गिरोऽभितः । सर्वानाश्चर्यमेकोऽपि, खेचरान्भूचरोऽभ्यभूत् ॥ ३३८ ॥ ताभिः पराभिभूताश्च, तेऽभूवन्दुःखिता भृशम् । उच्छ्वास्यमानाः शस्त्रीभिर्युधीव पतिता भटाः ॥ ३३९ ॥ रत्नपालोऽपि विद्वेषिजयश्रियमिवाङ्गिनीम् । सौभाग्यमञ्जरीं कन्यां, पाणौ चक्रे महामहैः ॥ ३४० ॥ दत्ता हेमाङ्गदेनात्मप्राच्यप्रीत्या च भूरिशः । विद्याः प्रज्ञप्तिगौर्याद्याः, साधयामासिवान् नृपः ॥ ३४१ ॥ वैताढ्यस्योभयोः श्रेण्योर्जित्वा सर्वनभश्चरान् । प्रावर्त्तयत्पुनः स्वाज्ञां, सिद्धविद्यः स भूमिभुग् ॥ ३४२ ॥ विविधप्राभृतश्रेणीसम्भृतश्रीस्ततोऽथ सः । ताभिः प्रियाभिस्तिसृभिः, सहितः सुहिताशयः ॥ ३४३ ॥ निषेव्यमाणो विद्याभृद्वीरैर्हेमाङ्गदादिभिः । दिव्यं विमानमारूढः, प्राप्तः स्वनगरं सुखम् ॥ ३४४ ॥ गजापहारादारभ्य, दुःखदाहार्दिताः प्रजाः । स्वदर्शनसुधावृष्ट्या, सद्योऽशीतलयच्च सः ॥ ३४५ ॥ प्रतापतपनः

प्राप्तं, प्राच्यपुण्यैः पचेलिमैः । निःसपत्नमथ प्राज्यं, राज्यं पालयतीति सः ॥ ३४६ ॥ अथ च । कथामपूर्वामाश्चर्यभूतां यः कथयेत्पुमान् । तस्मै दत्ते सुवर्णानां, दश लक्षाः स निश्चितम् ॥ ३४७ ॥ दीनार्त्तदुःस्थानाथादीन्स्थूललक्षः स लक्षशः । साधारयत्यनुदिनं, स्वर्णलक्षा ददद्दश ॥ ३४८ ॥ सम्यक् काव्यरसाऽभिज्ञः, स कूर्चालसरस्वती । दत्ते सत्काव्यकर्तृभ्यो, लक्षाश्चानुदिनं दश ॥ ३४९ ॥ सर्वत्र प्रसरत्कीर्त्तिः, कीर्त्तिदानोल्लसन्मतिः । द्वे स्वर्णलक्षे अर्थिभ्यो, विश्राणयति चान्वहम् ॥ ३५० ॥ धर्मप्रासातुलैश्वर्यो, धर्मश्रद्धालुहृत्पुनः । सप्तक्षेत्र्यां व्यययति, त्रिंशल्लक्षीं स सर्वदा ॥ ३५१ ॥ स्वान्तःपुरस्वाङ्ग[3]भोगपत्तिभृत्यनियोगिषु । गजाश्वादौ च तस्याष्टत्रिंशल्लक्षव्ययो ध्रुवम् ॥ ३५२ ॥ अमुष्य प्रत्यहं स्वर्णकोटी ह्येवं विलोक्यते । तेन दिव्यरसेनाशु, सापि सम्पद्यते सुखम् ॥ ३५३ ॥ इतश्च द्यूतकारोऽस्ति, तत्रैकः प्रत्यहं च सः । लक्षं जयति द्रम्माणां, पुनर्हारयति ध्रुवम् ॥ ३५४ ॥ द्रम्मत्र्यंशस्तु सन्ध्यायां, ध्रुवस्तस्यावशिष्यते । तन्मूल्येनाऽथ गोधूमपूपान्पचति स क्वचित् ॥ ३५५ ॥ गत्वा चण्डीगृहे चण्डीस्कन्धे न्यस्य पदौ च सः । प्रदीपतैलेनाऽभ्यज्य, तान्निःशूकोऽत्ति सर्वदा ॥ ३५६ ॥ इदानीमत्र यद्येति, जनः कश्चन कर्हिचित् । सर्वत्र विश्रुतं नूनं, मन्माहात्म्यमुपैति तत् ॥ ३५७ ॥ चिन्तयन्तीति सुचिरं, भृशं खेदमुपेयुषी । सा चण्डी कथमप्येनं, निवारयितुमिच्छति ॥ ३५८ ॥ तथा भक्षयति स्वैरं, तस्मिन्पूपानथाऽन्यदा । सा तं भापयितुमना, रसनां निरसीसरत् ॥ ३५९ ॥ चण्डि! खाद त्वमप्येतत्पूपखण्डमिति ब्रुवन् । जिह्वायां सोऽमुचत्साऽपि, मायया तदभक्षयत् ॥ ३६० ॥ जिह्वायां सुप्रलम्बायां, कर्पितायां पुनस्त्वया ।

१ 'दानशौण्डः' । २ "व्ययति त्रिंशतं लक्षाः, सप्तक्षेत्र्या स सर्वदा ।" इत्यपि । ३ 'स्वाङ्गस्वान्तःपुरीभोग' इत्यपि ।

रे चण्डि! रण्डे! लुब्धासीत्युक्त्वा तेनाऽथ थूत्कृतम् ॥ ३६१ ॥ रसनां थूत्कृतोच्छिष्टां, प्रक्षिपामि कथं मुखे ? । इति ध्यात्वा तथैवास्थात्, सा विषण्णमनाः सुरी ॥ ३६२ ॥ तथा भीष्ममुखीं वीक्ष्य, चण्डीं प्रातरथो जनाः । अयमुत्पात उत्पन्नोऽनर्थायेत्यवदन्मिथः ॥ ३६३ ॥ शान्तिकादीन्यकार्यन्त, तैश्च तस्योपशान्तये । तथापि देवी रसनां, नोच्छिष्टेत्यक्षिपन्मुखे ॥ ३६४ ॥ शमयत्येनमुत्पातं, योऽथ स्वर्णशतं हि सः । लभतेऽद्य जनैरेवं, पटहोऽवाद्यताऽभितः ॥ ३६५ ॥ आत्मप्रत्यक्षमुत्पन्नं, तमुत्पातं विदंस्तदा । स धूर्त्तः पटहं स्पृष्ट्वा, सुवर्णशतमग्रहीत् ॥ ३६६ ॥ विजनं कारयित्वाऽथ, प्रविश्यान्तर्गृहं च सः । प्रौढं पापाणमुद्यम्य, चण्डीं निष्ठुरमित्यवग् ॥ ३६७ ॥ रे चण्डि ! रण्डे ! रसनां, पश्चात्क्षिप मुखेऽधुना । नो चेदनेन भङ्क्ष्यामि, भवत्या नूनमाननम् ॥ ३६८ ॥ दुरात्मनोऽस्य नोद्धारः, कश्चित्पापेऽत्र कर्मणि । आत्महानिर्जने हास्यं, चेत्थं चेति भयेन सा ॥ ३६९ ॥ किमप्यनर्थमेतस्मिन्निःशूके कर्त्तुमक्षमा । अनन्यगतिकत्वेन, तदा जिह्वां मुखेऽक्षिपत् ॥ ३७० ॥ युग्मम् ॥ शान्तेऽथ तस्मिन्नुत्पाते, पौराः प्रमुदिताः समे । धूर्त्तश्च तद्धनं सर्वं, तस्मिन्नेवाऽह्न्यहारयत् ॥ ३७१ ॥ यदुक्तम्—

"द्विघटं ग्रहिलामूर्ध्नि, द्यूतकारकरे धनम् । हारश्च मर्कटीकण्ठे, कियद्वेलं हि तिष्ठति" ॥ १ ॥

तदनन्तरमप्येत्य, नक्तं चण्डीगृहे सदा । पूपानत्ति गताशङ्को, द्यूतकारस्तथैव सः ॥ ३७२ ॥ अथान्यदा किमप्यन्यन्निःशूके कर्त्तुमक्षमा । दूना दुर्विनयाच्चास्माद्धूर्त्ते तत्रागते निशि ॥ ३७३ ॥ चण्डी निष्काशयामास, दीपमेव स्ववेश्मतः[3] ।

१ 'र्थं तस्मिंश्च' इत्यपि । २ 'व दिनेऽव्ययत्' इत्यपि । ३ 'वेश्मनः' इत्यपि ।

तिष्ठ दीप! क्व यासीति, वदन्पृष्ठेऽचलच्च सः ॥ ३७४ ॥ युग्मम् ॥ तदा देवीनियोगेन, दीपोऽवक् तमिति स्फुटम् । रूक्षानेवाद्धि रे! पूपांस्तैलं दास्ये न ते मनाग् ॥ ३७५ ॥ यास्याम्यब्धेः परतटं, पश्चाच्च वलसे न किम् ?। सोऽथाह तैलं लास्यामि, तत्राप्येत्य क्व यास्यसि ? ॥ ३७६ ॥ दीपोऽग्रे पृष्ठतो धूर्त्त, इति यान्तौ द्रुतं द्रुतम् । भास्करेऽभ्युदिते प्राप्तौ, दूराटव्यामुभावपि ॥ ३७७ ॥ तं तदा विप्रतार्यैवं, तत्र दीपस्तिरोहितः । क्षिप्तोऽहिवद् रिपुर्दूरमिति हृष्टा च सा सुरी ॥ ३७८ ॥ हा ! देव्या वञ्चितोऽस्मीति, विषण्णोऽथ वने भ्रमन् । स धूर्त्तः प्रज्वलद्वह्निकुण्डस्य सविधे स्थितम् ॥ ३७९॥ अप्सरोजैत्रसौभाग्यं, प्रत्यग्रोल्लासि यौवनम् । कन्याद्वयं नरं चैकं, दृष्टवान् निकलाङ्कम् ॥ ३८० ॥ युग्मम् ॥ किमर्थं के युवामत्रेत्यादि पृष्टे च तेन ते । नोचतुस्ते परं किञ्चिद्व्यावृत्त्याऽगात्पुरेऽथ सः ॥ ३८१ ॥ रत्नपालोऽत्र नृपतिस्तथ्यापूर्वाद्भुतां कथाम् । कथयित्रे सुवर्णानां, लक्षा दत्ते दश ध्रुवम् ॥ ३८२ ॥ इति ज्ञात्वा स राज्ञोऽथ, तद्वृत्तं सर्वमप्यवग् । कौतुकेन नृपः सद्यस्तत्र तेन सहागमत् ॥ ३८३ ॥ कृशानुकुण्डं किमिदं, दीनोऽयं कश्च के युवाम् । विश्वस्ते वदतं सम्यग्, रत्नपालोऽस्म्यहं नृपः ॥ ३८४ ॥ पृच्छतीत्थं नृपे तस्मिंस्तयोरेकाऽवदत्कनी । राजन्! गन्धर्वराजस्य, नाम्ना विश्वावसोः सुते ॥ ३८५ ॥ देवसेना च गन्धर्वसेनेत्यावां हि विश्रुते । तारुण्यमाप्ते लावण्यकन्दोद्भेदाम्बुदं क्रमात् ॥ ३८६ ॥युग्मम्॥ तत्तन्मन्त्रघृताहुत्यादिभिर्दीप्तातुलाऽर्चिषि । लब्धुं शक्ये न केनापि, मन्त्रतन्त्रौषधीबलैः॥ ३८७ ॥ यमास्यभीष्मे दिव्याग्नौ, यः स्नास्यति नरोत्तमः । भावी भर्त्ता भवत्पुत्र्योः, स नूनं सत्त्वसेवधिः ॥ ३८८ ॥ युग्मम् ॥ परैरजेयो भविता, भरतार्द्धाऽधिपश्च सः । इति दैवज्ञवाग्नुन्नः, पिता नौ मुक्तवानिह ॥ ३८९ ॥ सत्त्वाधिकं च तमभिज्ञातुं तेन स्वविद्यया ।

हीनसत्त्वैः सुदुष्प्रेक्ष्यमग्निकुण्डमिदं कृतम् ॥ ३९० ॥ झम्पामिहाऽस्मल्लोभाच्च, ददत्कोऽप्येष खेचरः । संशयालुरभूद्देव्या, विकलाङ्गीकृतश्च तत् ॥ ३९१ ॥ निराशोऽयं निरुत्साहः, स्वस्थानं वाऽथ यास्यति । सत्त्वाद्दतेन सिद्धिर्यत्सर्वं सत्त्वे प्रतिष्ठितम् ॥ ३९२ ॥ कन्यावक्त्रादिति श्रुत्वा, सत्त्वाढ्यः सहसा नृपः । कुण्डे झम्पामदात्तच्च, सत्त्वेनाऽभूत्सुधामयम् ॥ ३९३ ॥ तत्र स्नानेन समभूद्राजा वज्रवपुः पुनः । अथागाज्ज्ञाततद्वृत्तस्तत्र विश्वावसुः खगः ॥ ३९४ ॥ रत्नपालनृपालेन, समं स्वसुतयोस्तयोः । हृष्टोऽथाचीकरत्पाणिग्रहणं स महामहैः ॥ ३९५ ॥ प्राप्तः प्रमुदितः पत्नीद्वयात्स्या स्वपुरं नृपः । विंशतिं स्वर्णलक्षांश्च, तस्मै द्यूतकृते ददौ ॥ ३९६ ॥ आगच्छद्भिश्च गच्छद्भिरथान्यायार्जितैर्धनैः । कितवः प्रत्यहं योऽभूत्पूर्णो रिक्तः पुनः पुरा ॥ ३९७ ॥ नृपादासादितप्राज्यसुवर्णो न्यायवर्त्मना । सोऽप्यभूद्वर्द्धमानार्द्धिः, स्पष्टं न्यायफलं ह्यदः ॥ ३९८ ॥ तस्योत्तमचरित्रस्य, सोऽक्षधूर्त्तश्च भूभुजः । परिचित्योपदेशैश्च, निर्वृत्तो व्यसनाध्वनः ॥ ३९९ ॥ निदाघेऽथान्यदा सिद्धसरित्स्रोतसि शीतले । विधित्सुः सलिलक्रीडां, नावमारूढवान्नृपः ॥ ४०० ॥ प्रणुन्नाऽऽकस्मिकेनाऽथ, पृष्ठप्रबलवायुना । चचाल पूर्वाभिमुखं, वायुवेगेन मङ्गिनी ॥ ४०१ ॥ ग्रामारामादि निखिलं, चक्रारूढमिव भ्रमत् । तदयोरुभयोः पश्यत्यवनीशे सकौतुकम् ॥ ४०२ ॥ घटीद्वयेन पूर्वाब्धेस्तटं प्राप्याऽथ मङ्गिनी । सा स्वयं स्खलितेवास्थादुत्तीर्णश्च नृपस्तटम् ॥ ४०३ ॥ युग्मम् ॥ तत्रागत्य नरः कश्चिद्विनयेनावदच्च तम् । क्व प्राप्तः परदेशेऽहं, विषादमिति मा कृथाः ॥ ४०४ ॥ महानुभावस्य तवागमनेनात्र निश्चितम् । सर्वेषामपि यद्भावि, सर्वं सुन्दरमायतौ ॥ ४०५ ॥ नृपस्तदा तमित्याख्यत्सुदु-

१ 'सुदुष्प्रेक्ष,' इत्यपि । २ नौका ।

र्लक्षामिहायतिम् । शकुनैः कैर्निमित्तैर्वा, सौम्य ! जानासि साम्प्रतम् ॥ ४०६ ॥ सत्यवादी सोऽप्यवादीद्वेद्मि कालं यथोत्तरम् । यथास्थितं हि तद्वृत्तं, शृणु सत्त्वनिधेऽधुना ॥ ४०७ ॥ पूर्वदेशं दशग्रामकोटियुक्तममुं नृपः । रत्नसेनो भुनक्त्यत्रासन्ने रत्नपुरे वसन् ॥ ४०८ ॥ एकादश महेभानामस्य लक्षा महौजसाम् । रथानां विंशतिर्लक्षा, लक्षाश्च दश वाजिनाम् ॥ ४०९ ॥ कोट्यश्च दश पत्तीनामित्याद्यस्त्यखिलं परम् । कर्मानुभावाद् हृन्नेत्रानन्दनो नास्ति नन्दनः ॥ ४१० ॥ अथाऽस्य चाऽभूत्कनकावलीराज्ञ्यां सुताद्वयम् । तत्राद्या कनकमञ्जर्यन्या च गुणमञ्जरी ॥ ४११ ॥ तयोरकस्मात्तारुण्ये, प्राच्यजन्मार्जितैरघैः । अथोदभूद्गलत्कुष्टमन्धता च यथाक्रमम् ॥ ४१२ ॥ नानाशास्त्रविदो वैद्या, नृपादेशात्सहस्रशः । तयोरनेकैर्भैषज्यैश्चिकित्सां चक्रिरे चिरम् ॥ ४१३ ॥ मान्त्रिकाश्च तयोर्मन्त्रैस्तन्त्रैर्यन्त्रैश्च भूरिभिः । स प्रत्ययैः शुभोत्साहं, चक्रुर्नैकाः प्रतिक्रियाः ॥ ४१४ ॥ यथाम्नायं यतन्ते स्म, तत्रान्येऽपि सुभूरयः । तयोः कर्मानुभावेन, परं नाभून्मनाग्गुणः ॥४१५॥ मन्यमाने मुधैवात्ममर्त्त्यजन्मामयार्दिते । ते दुःखान्मरणोन्मुख्यावथ जाते उभे अपि ॥४१६॥ तयोश्च निविडस्नेहपाशबद्धहृदौ तदा । राजा राज्ञी च नियतं, पृष्टतो मर्त्तुमिच्छतः ॥ ४१७ ॥ किंकर्त्तव्यतया मूढैर्गूढाऽर्थैरथ मन्त्रिभिः । आराद्धा विविधाऽर्चाभी, राज्याधिष्ठायिनी सुरी ॥ ४१८ ॥ सर्वसाक्षिकमाकाशे, स्थित्वा सा स्पष्टमित्यवग् । रत्नपालः क्षितिपतिः, पुरात्पाटलिपुत्रकात् ॥ ४१९ ॥ नावारूढो मत्प्रयोगात्सद्योऽप्यत्र समेष्यति । महात्मा स च ते कन्ये, विधास्यति निरामये ॥ ४२० ॥ युग्मम् ॥ इति श्रुत्वा प्रमुदिता, हृदि सर्वे नृपादयः । विद्युद्विस्फूर्जितमिवाद्दश्याजनि च सा

१ 'असाश' इत्यपि ।

सुरी ॥ ४२१ ॥ देव्या तदत्रानीतोऽसि, कन्याव्याध्युपशान्तये । योजनानां पञ्चशती, त्वत्पुरं स्यादितः पुरात् ॥ ४२२ ॥ महर्द्ध्या मुदिता देव्या, गिरा ज्ञातत्वदागमाः । तव सम्मुखमायान्तो, नृपाद्याः सन्ति सम्प्रति ॥ ४२३ ॥ इति ब्रुवाण एवाऽस्मिंस्ते तत्रैत्यानमन्नृपम् । नगरं च नयन्ति स्म, विनयाद्विविधोत्सवैः ॥ ४२४ ॥ परोपकृतिनिष्णातो, नृपाद्यैरथ सोऽर्थितः । रोगाभिभूतं तत्कन्यायुग्मं कर्त्तुं निरामयम् ॥ ४२५ ॥ सर्वाऽवसरोपयोगी, स्याद्वपुःपार्श्ववर्त्त्ययम् । इत्यङ्गदस्थे न्यस्तोऽभूत्, प्राक्कियाँल्लघुकुम्पके ॥ ४२६ ॥ भाले तेन रसेनाऽथ, स्पृष्टा तेन कृपालुना । आसेचनकरूपश्रीस्तत्राद्या समभूत्कनी ॥ ४२७ ॥ अञ्जिताऽक्षी च तेनैव, कनी सद्यः कनीयसी । दिवापि तारकालोकक्षमदृष्टिरजायत ॥ ४२८ ॥ गुणैः क्रीते ततः पुत्र्यौ, रत्नपालनृपाय ते । प्रदत्ते रत्नसेनेन, परिणीते च तेन ते ॥ ४२९ ॥ रत्नसेनोऽथ जामात्रे, तस्मै राज्यमदान्निजम् । स्वयं जग्राह प्रव्रज्यां, भवोद्विग्नमनाः पुनः ॥ ४३० ॥ दिनानि कतिचित्तत्र, रत्नपालोऽपि सप्रियः । स्थित्वा तद्राज्यचिन्तायां, मूलामात्यान्नियुज्य च ॥ ४३१ ॥ पथि प्रौढोपदापाणिमिलन्नैकनृपार्चितः । बलैराकम्पयन्नुर्वीं, क्रमादेति निजं पुरम् ॥ ४३२ ॥ इतश्चाऽपहृते नावा, नृपे सामन्तमन्त्रिणः । व्यमृशन्निति सोद्वेगं, किंकर्त्तव्यजडा मिथः ॥ ४३३ ॥ सम्यक् स्वरूपं हा ! राज्ञो, ज्ञायते न शुभाशुभम् । तदद्यास्वामिकं राज्यं, रक्षणीयमिदं कथम् ? ॥ ४३४ ॥ प्रायो निःस्वामिकं राज्यं, सम्यग्रक्षाविधिं विना । दुष्टा द्विषोऽधितिष्ठेयुर्निर्जीवाङ्गमिवाऽमराः ॥ ४३५ ॥ महाभाग्यबलस्यास्य, राज्यं तावदिहास्तु वा । इदानीं पदयोरेवमस्माकं हि कृतज्ञता ॥ ४३६ ॥ सामन्तामात्यसांमत्यादिति सिंहासने चिरम् । निवेश्य नेमुर्निखिला, राजवर्ग्याः प्रभोः पदा ॥ ४३७ ॥ तस्मिन्सुराज्ञि

राजन्या, दानसन्मानतोषिताः । न केचिदपि शून्येऽपि, राज्ये विघटितास्तदा ॥ ४३८ ॥ अथ दर्शनसोत्कण्ठा, अकुण्ठ-स्नेहसम्भ्रमाः । राज्ञ्यागच्छति ते सर्वे, सद्यः सम्मुखमाययुः ॥४३९॥ तान्सम्भाष्य यथौचित्यं, प्राविशत्स्वपुरेऽथ सः । दीनदुस्थार्थिनो दानैः, प्रीणयन्परितः पथि ॥ ४४० ॥ निजास्थानसभां[1] प्राप्य, सर्वांश्चानन्दयत्प्रजाः । उदयक्ष्माभृतश्चूडां, चक्रवाकीरिवार्यमा ॥ ४४१ ॥ स्नेहाच्च स्ववियोगाग्निप्रज्वलन्मनसश्चिरात् । सर्वा यथौचितालापैः, प्रेयसीरप्यपिप्रिणत् ॥ ४४२ ॥ शृङ्गारसुन्दरी शुद्धशीला १ रत्नवती २ तथा । पत्रवली ३ मोहवल्ली ४, तथा सौभाग्यमञ्जरी ५ ॥४४३॥ देवसेना च ६ गन्धर्वसेना ७ कनकमञ्जरी ८ । गुणाच्च मञ्जरी ९ तस्य[2], पट्टराज्ञ्यो नवाऽभवत् ॥४४४॥ ग्रामाणां स्वःसमृद्धीनां, विंशति-स्तस्य[3] कोटयः । सहस्रा रत्नयोनीनां, पत्तनानां च विंशतिः ॥ ४४५ ॥ वेलाकूलसहस्राणि, द्वादशैतस्य भूभुजः । दश द्वीपसहस्राणि, तावन्तश्च किरीटिनः ॥ ४४६ ॥ चत्वारिंशत्पत्तिकोट्यस्त्रिंशल्लक्षाश्च दन्तिनाम् । लक्षा रथानां चाऽश्वानां, चत्वारिंशच्च निश्चिताः ॥ ४४७ ॥ सहस्रा जलदुर्गाणां, पञ्चाऽन्येषां च ते दश । खेटाः सहस्रं सेवन्ते, तं च हेमाङ्गदादयः ॥ ४४८ ॥ दीनदुस्थोद्धृतौ धर्मे, स्वाश्रितानां च पोषणे । तस्य राज्ञः प्रतिदिनं, स्वर्णकोटिव्ययो गृहे ॥ ४४९ ॥ यः प्राप्तः प्राक्तनैः पुण्यैस्तुम्बकस्थो महारसः । तेन तावदपि स्वर्णं, तस्य सम्पद्यते सदा ॥ ४५० ॥ आधयो व्याधयः सन्तापीतयश्च प्रसृत्वराः । रसानुभावात्तद्राज्ये, प्रासरन्नहि कर्हिचित् ॥ ४५१ ॥ रत्नपालस्य नृपतेरथ मेघरथादयः । क्रमेणासञ्शतं पुत्राः, सर्पत्राकृतशत्रवः[4] ॥ ४५२ ॥ खेलतोऽस्य सुखाम्भोधावीदृगैश्वर्यशालिनः । सुखं दशशरल्लक्षा, व्यतीयुर्वासरा इव

---

१ 'सभामाप्य' इत्यपि । २ 'त्यस्य' इत्यपि । ३ 'तस्य विंशतिकोटयः' इत्यपि । ४ उन्मूलितशत्रवः ।

॥४५३॥ अथान्यदा पुरे तत्र, महासेनमहामुनिः । मूर्त्तो धर्म इव प्रापत्, पौरानुग्रहकाम्यया ॥ ४५४ ॥ तं मिथ्यात्वविषावेगविध्वंसि वचनामृतम् । श्रद्धालुमनसः पौरा, नैके वन्दितुमाययुः ॥ ४५५ ॥ रत्नपालोऽपि नृपतिः, सान्तःपुरपरिच्छदः । तं जङ्गममहातीर्थमुपासितुमुपागमत् ॥ ४५६ ॥ संसारापारकान्तारोत्तारणप्रतिभूर्नृणाम् । तदादिशन्मुनिश्रेष्ठो, धर्ममार्गमिति स्फुटम् ॥ ४५७ ॥ दुःखाग्निव्यापतज्जन्मजरामृत्यामयादिनः । विभ्यद्योऽत्यन्तसातोद्यं, यियासत्यचिरात्पदम् ॥४५८॥ संसारसागरोत्तारतरणिप्रभमादरात् । स सम्यगाराधयतादन्वहं धर्ममार्हतम् ॥ ४५९ ॥ स चाराद्धुं सुसाधः स्याज्जये सर्वान्तरद्विषाम् । आत्मैवाद्यो हि तेष्वेतज्जये यत्ते जिताः समे ॥ ४६० ॥ यदुक्तम्—

"एगे जिए जिआ पंच, पंच जिए जिआ दस । दसहा उ जिणित्ताणं, सव्वसत्तू जिणामहम् ॥ १ ॥

एगप्पा अजिए सत्तू; कसाया इन्दियाणि अ । ते जिणित्तु जहानायं, विहरामि अहं मुणी" ॥ २ ॥

शतं सहस्रं लक्षं वा, ये जयन्ति युधि द्विपः । तेऽपि क्रूराशयाः शूरा, नात्मानं जेतुमीशते ॥ ६६१ ॥ गुर्वीं कोटिशिलां दोर्भ्यां, हेलयैवोत्क्षिपन्ति ये । युद्धैकवीरास्तेऽप्यत्र, नात्मानं जेतुमीश्वराः ॥ ४६२ ॥ कुलीना वाग्मिनः सम्यक्, सर्वविद्याविदो हि ये । नियम्य स्वहिते योक्तुं, तैरप्यात्मा न शक्यते ॥ ४६३ ॥ यो धर्मं बोधयत्यात्मगिरा मर्त्यान् दशान्वहम् । स्वयं हि विषयान्भुङ्क्ते, नन्दिषेणमुनिस्तु सः ॥ ४६४ ॥ यदुक्तम्—

---

१ मोक्षरूपम् । २ "एकस्मिन् जिते जिताः पञ्च, पञ्चसु जितेषु जिता दश। दशधा तु जित्वा, सर्वशत्रून् जयाम्यहम्"॥ इति च्छाया ॥
३ "एकस्मिन् आत्मनि अजिते, कषाया इन्द्रियाणि च । ते जित्वा यथाज्ञातं, विहरामि अहं मुनिः" ॥ इति च्छाया ।

"[1]दस दस दिवसे दिवसे, धम्मे बोहेइ अहव अहिअयरे । इय नं दिसेणसत्ती, तहवि अ से संजमविवत्ती" ॥ १ ॥

तथा—

"[2]पइदिवसं दसजणवोहगोऽवि सिरिवीरनाहसीसोऽवि । सेणिअसुओऽवि सत्तो, वेसाए नन्दिसेणमुणी" ॥ १ ॥

कश्चिद्दुष्टान् रिपूंल्लक्षं, युद्धे जयति दोर्बलात् । जयेदात्मानमेकं वा, तस्यायं परमो जयः ॥ ६५ ॥ यदुक्तम्—

"[3]जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे । एगं जिणिज्ज अप्पाणं, एस से परमो जओ" ॥ १ ॥

दम्यन्ते हि सुखं नैकैरप्युन्मत्ता गजादयः । न तु शक्यो दमयितुं, कैरप्यात्मा निरङ्कुशः ॥ ६६ ॥ यदुक्तम्—

"[4]खरकरहतुरयवसहा, मत्तगइंदावि नाम दम्मन्ति । इक्को नवरि न दम्मइ, निरंकुसो अप्पणो अप्पा" ॥ १ ॥

संविग्नैर्यैश्च संसारोद्विग्नैरात्मा हि दम्यते । अत्रामुत्राऽपि सुखिनस्ते भवेयुर्यदुच्यते ॥ ४६७ ॥

"[5]अप्पा चेव दमेअव्वो, अप्पा हु खलु दुद्दमो । अप्पादन्तो सुही होइ, अस्सिं लोए परत्थ य" ॥ १ ॥

---

१ "दश दश दिवसे दिवसे, धर्मे बोधयति अथवा अधिकतरान् । इति नन्दिषेणशक्तिः, तथापि च तस्य संयमविपत्तिः" ॥ इति च्छाया । २ "प्रतिदिवसं दशजनबोधकोऽपि श्रीवीरनाथशिष्योऽपि । श्रेणिकसुतोऽपि सक्तो, वेश्यायां नन्दिषेणमुनिः" ॥ इति च्छाया । ३ "यः सहस्रं सहस्राणां, संग्रामे दुर्जयान् जयेत् । एकं जयेत् आत्मानं, एष तस्य परमो जयः" ॥ इति च्छाया । ४ "खरकरभतुरगवृषभा, मत्तगजेन्द्रा अपि नाम दम्यन्ते" एको नवरं न दम्यते, निरङ्कुश आत्मन आत्मा" ॥ इति च्छाया । ५ "आत्मा एव दमितव्य, आत्मैव खलु दुर्दमः । आत्मदान्तः सुखी भवति, अस्मिन् लोके परत्र च" ॥ इति च्छाया ।

जितात्मता पुनर्लिङ्गैर्ज्ञायते न तु भाषितैः। सूर्योदयो हि प्रभया, लक्ष्यो न शपथव्रजैः ॥ ४६८ ॥ समसंवेगनिर्वेदास्तिक्यमैत्रीदयादमैः। समत्वाममताधैर्यैश्च, ज्ञायते हि जितात्मता ॥ ४६९ ॥ अप्यनादिभवाभ्यस्ता, सांसारिकसुखस्पृहा। प्रायो नोत्पद्यते पुंसां, हृदि जातु जितात्मनाम् ॥ ४७० ॥ यतन्ते च जितात्मानः, सर्वस्थाम्ना शुभाशयाः। सर्वज्ञोल्पज्ञसद्धर्मानुष्ठानेषु निरन्तरम् ॥ ४७१ ॥ तस्माच्च सदनुष्ठानोद्योगात्तीर्णभवार्णवाः। जितात्मानोऽचिरादेव, परमं पदमाप्नुयुः ॥ ४७२ ॥ दृष्टान्तश्चाऽत्र वो मुग्धभट्टपत्नी सुलक्षणा। विजित्यात्मानमचिरात्परं पदमुपेयुषी ॥ ४७३ ॥ तथाहि—

रम्यप्रदेशः कोशाम्बीपुर्यासन्नः समृद्धिमान्। शालिग्रामाभिधो ग्रामः, प्रसिद्धः समभूत्पुरा ॥ ४७४ ॥ आसीत्तत्र गुणोद्दामधामा दामोदरो द्विजः। शम्भोरिवोमा सोमाऽस्य, सती प्राणप्रिया पुनः ॥ ४७५ ॥ मुग्धस्वभावः समभून्मुग्धभट्टः सुतस्तयोः। स्नुषा च सत्कुलोत्पन्नान्वर्थसंज्ञा सुलक्षणा ॥ ४७६ ॥ मुग्धभट्टोऽन्यदा पित्रोः, परलोकमुपेयुषोः। देशान्तरेऽगाद्दारिद्र्यनुन्नो मुक्त्वा गृहे प्रियाम् ॥ ४७७ ॥ लघोर्वृद्धस्य चाऽभावात्सद्मन्येकाकिनी सती। बिभ्यत्यप्यै[1]सदाचारकुलमालिन्यतो हि सा ॥ ४७८ ॥ लोलप्रकृतितारुण्योच्छृङ्खलं विषयान् स्मरन्। निरोद्धुं कथमप्यात्समानसं नाशक्त्तदा ॥ ४७९ ॥ युग्मम् ॥ महेभ्यपत्न्या कमलश्रियाऽथामलशीलया। समं मनोनिरोधार्थं, सा सख्यमतनोत्सती ॥ ४८० ॥ तत्सङ्गैत्य सदा स्नेहगोष्ठ्या व्याक्षिप्य सा पुनः। मनो निषिद्धाचरणाध्वनः किञ्चिन्निषिध्यति ॥ ४८१ ॥ अन्येद्युस्तत्र विमला, गणिनी विमलाशया। एत्यास्थात्सपरीवारोपाश्रये कमलश्रियः ॥ ४८२ ॥ अदृष्टपूर्विणी साध्वी-

१ 'यस्मात्' इत्यपि। २ 'बिभ्यत्यपि सदा' इत्यपि।

स्त्राप्ताथ सुलक्षणा । ताः प्रेक्ष्य मौग्ध्यात्स्वसखीमित्यप्राक्षीत्सविस्मयम् ॥ ४८३ ॥ निःस्वामिका भ्रमन्त्येताः, किं सर्वत्र सखि ! क्षितौ ?। कुत्रासां पत्यपत्यादि, विद्यते च कुटुम्बकम् ॥ ४८४ ॥ मङ्गल्यभूषाभोगाङ्गैरशेषैरपि वर्जिताः । असंस्कृताङ्गनेपथ्याः, किञ्चैता मूर्ध्नि मुण्डिताः ॥ ४८५ ॥ कमलश्रीरिति प्रोचे, तां मुग्धप्रकृतिं तदा । एताः सखि ! महासत्यः, सत्यसंयमजीविताः ॥ ४८६ ॥ मङ्गल्यभूषाविमुखास्त्यक्तनिःशेषकल्मषाः । निष्कषायामलहृदस्तत्त्वार्थोपनिषद्विदः ॥ ४८७ ॥ अजिह्मब्रह्मनिरता, विरता लौकिकाध्वनः । सार्वोपदिष्टानुष्ठानाऽवहिताः पिहिताश्रवाः ॥ ४८८ ॥ सर्वां स्वजातिमुद्धर्तुं, भवकूपे निपेतुषीम् । कृतार्था अपि कृपया, विहरन्त्यभितः क्षितौ ॥ ४८९ ॥ चतुर्भिः कलापकम् ॥ मात्राद्यशेषसंसारसम्बन्धप्रतिबन्धमुक् । सर्वसावद्यविरतौ, लीनमासां मनश्चिरात् ॥ ४९० ॥ राज्ञां दुहितरः काश्चित्काश्चिच्च व्यवहारिणाम् । एता विरक्ता भोगेभ्यो, निःसङ्गं धर्ममाश्रिताः ॥ ४९१ ॥ गोत्रदेवीमिव श्रद्धावन्तश्च जननीमिव । सर्वेऽपि बहु मन्यन्ते, नृपेभ्याद्याः सदाप्यमूः ॥ ४९२ ॥ सखि ! सङ्गतिरप्यासां, परमार्थदृशां ध्रुवम् । जनैरपुण्यैर्दुष्प्रापा, शमसाम्यरसप्रपा ॥ ४९३ ॥ वन्दनाराधनाद्यासामास्तां निःशेषदुःखहृत् । एतत्पदरजोऽप्याशु, ललाटस्पृष्टमिष्टकृत् ॥ ४९४ ॥ इति सख्या गिरा ज्ञातसम्यक्साध्वीगुणाऽथ सा । सरलप्रकृतिश्चित्ते, दध्याविति सविस्मयम् ॥ ४९५ ॥ देशान्तरमिते पत्यौ, स्वल्पकालमपीह मे । सन्मार्गे न चलं चेतः, कथंचिदपि तिष्ठति ॥ ४९६ ॥ शीलं सर्वोपधाशुद्धं, पालयन्त्यः सदाप्यमूः । कथं नाम निरुन्धन्ति, तारुण्यतरलं मनः ? ॥ ४९७ ॥ मन्त्रः किमासां साम्नायः, कश्चिद्वा काचिदौषधी ? । सम्यग्गुरूपदिष्टोऽस्ति, कश्चिदन्योऽथवा विधिः ॥ ४९८ ॥ तत्पृच्छामि सकृत्साध्वीं, मनोरोधनिबन्धनम् । कुल-

स्त्रीणां हि सर्वत्र, सोपयोगं तदीक्ष्यते ॥४९९ ॥ गणिनीमथ साऽप्राक्षीदम्ब ! सम्यग् निवेद्यताम् । साध्व्यस्तरुण्यस्तरलं, रुन्धन्ति स्वमनः कथम् ? ॥ ५०० ॥ साप्यूचे नव्यनव्योद्यत्सत्कृत्यव्यापृतात्मनाम् । असदध्वनि साध्वीनां, मनो जातु न गच्छति ॥ ५०१ ॥ हस्तिनो मर्मनिहिते, सदा लीनं यथाऽङ्कुशे । मनो हि विन्ध्यानुध्यानं, विधत्ते नहि कर्हिचित् ॥ ५०२ ॥ लीनं सदा सुसिद्धान्ताध्ययनाध्यापनादिषु । तथा मनोऽपि साध्वीनां, न जातु विषयान् स्मरेत् ॥ ५०३॥ यथा श्रृङ्खलितः कण्ठे, कपिरन्वेति योगिनम् । तथा चपलमप्यात्मव्यापारं नियतं मनः ॥ ५०४ ॥ अप्रशस्ते प्रशस्ते वा, व्यापारे नूनमात्मनः । प्रवर्तते मनो वाताध्वनि तूलमिवाम्बरे ॥ ५०५ ॥ आत्मा संयमयोगेषु, व्यापार्यः सद्भिरन्वहम् । तेषु प्रवृत्तं यद्याति, जातु नाऽसत्पथे मनः ॥ ५०६ ॥ यदुक्तं प्रशमरतौ—

"पैशाचिकमाख्यानं, श्रुत्वा गोपायनं च कुलवध्वाः । संयमयोगैरात्मा, निरन्तरं व्यापृतः कार्यः" ॥ १ ॥

सर्वतो देशतश्चापि, विशुद्धः संयमो भवेत् । सम्यक्त्वदार्ढ्ये नियतं, तत्स्वरूपमिदं पुनः ॥ ५०७ ॥ जीवादीन्नवतत्त्वार्थान्निसर्गाद्वोपदेशतः । सम्यग् यदङ्गी श्रद्धत्ते, तत्सम्यक्त्वमिहेष्यते ॥ ५०८ ॥ तत्र यः स्थिरधीः सर्वा, नित्यमावश्यकक्रियाः । सत्यापयेद्यथाकालं, सोऽचिरान्मुक्तिमाप्नुयात् ॥ ५०९ ॥ साध्व्याः सदुक्तिसंदर्भादित्यादेरुपदेशतः । प्रपेदे लघुकर्मत्वात्सा सद्यो धर्ममार्हतम् ॥ ५१० ॥ सम्यक् श्राद्धक्रियाः सर्वाः, साध्वीभिरथ शिक्षिताः । यथोक्तवलं सश्रद्धा, सत्यापयति सा सदा ॥ ५११ ॥ क्षयोपशमतो ज्ञानावरणीयस्य कर्मणः । साध्वी पार्श्वे प्रवचनप्रावीण्यं साऽभजत्क्रमात् ॥ ५१२ ॥ मनस्ततः प्रभृत्यस्या, नव्यनव्यार्हकर्मसु । लीनं मीन इवाम्भस्सु, नाऽस्मार्षीद्विषयान्तरम् ॥५१३॥ अथ प्राप्त-

श्चिराद्गेहं, मुग्धभट्टोऽन्यदा प्रियाम् । अप्राक्षीत्सुभ्रु ! सुचिरं, मद्वियोगे कथं स्थिता ? ॥ ५१४ ॥ साप्यूचे नाथ ! सद्धर्मसततव्यापृतात्मना । मया मनसि नाज्ञायि, त्वद्वियोगव्यथा मनाक् ॥ ५१५ ॥ प्रिये ! स को हि सद्धर्मस्तेनेत्युक्ताऽवदच्च सा । ज्ञानश्रद्धानचारित्ररूपोऽसौ धर्म आर्हतः ॥ ५१६ ॥ यथावस्थिततत्त्वानां, सङ्क्षेपाद्विस्तरेण वा । योऽवबोधस्तमत्राहुः, सम्यग्ज्ञानं मनीषिणः ॥ ५१७ ॥ रुचिर्जिनोक्ततत्त्वेषु, सम्यक्श्रद्धानमुच्यते । जायते तन्निसर्गेण, गुरोरधिगमेन वा ॥ ५१८ ॥ सर्वसावद्ययोगानां, त्यागश्चारित्रमिष्यते । सर्वतो देशतश्चैतत्साधोः श्राद्धस्य च क्रमात् ॥ ५१९ ॥ इत्याद्युक्तस्तया सार्वोपज्ञधर्मः सविस्तरम् । सरलप्रकृतेश्चास्य, स भृशं रुरुचे हृदि ॥ ५२० ॥ यदुक्तम्—

"अज्ञः सुखमाराध्यः, सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं, ब्रह्मापि नरं न रञ्जयति" ॥ १ ॥

सर्वज्ञोपज्ञसद्धर्मे, सम्यक्परिणते हृदि । निश्चयश्रावकः सोऽभून्मुग्धभट्टः शनैः शनैः ॥ ५२१ ॥ अथ भुञ्जानयोर्भोगान्मिथः स्निग्धहृदोस्तयोः । समयेऽजनि गार्हस्थ्याश्रमद्रुमफलं सुतः ॥ ५२२ ॥ सुतमारोप्य तं कट्यां, मुग्धभट्टोऽन्यदा प्रगे । शीतार्त्तो विप्रसङ्कीर्णां, धर्मार्थाग्निष्टिकां[1] ययौ ॥ ५२३ ॥ आत्मधर्म्मं विमुच्याऽयं, श्राद्धोऽभूदित्यसूयया । सर्वतो मण्डलीभूय, तिष्ठन्तस्तत्र वाडवाः ॥ ५२४ ॥ श्राद्धोऽसि हन्त ! ते पापं[2], धर्मार्थाग्निष्ठिका ह्यसौ । अत्राऽऽगा मा महाभाग !, तव धर्मो नु दूष्यते ॥ ५२५ ॥ तदेत्याद्युपहासोक्तीर्जल्पन्तः कथमप्यमुम् । विदूषकप्रकृतयो, नहि तापयितुं ददुः ॥ ५२६ ॥ त्रिभिर्विशेषकम् ॥ सोऽर्हद्धर्मोपहासेन, तेन खिन्नो भृशं तदा । समीचीनो यदि जिनोपज्ञधर्मः सनातनः ॥ ५२७ ॥ तदग्नि-

---

१ अङ्गारशकटी( ऍंगीठी ) । २ 'श्राद्धोऽसि ते महापापं' इत्यपि ।

पतितस्तिष्ठत्वक्षिताङ्गो ह्यसौ शिशुः । असूनृतश्चाधुनिकश्चेत्तदस्त्वेष भस्मसात् ॥ ५२८ ॥ इति ब्रुवाणः सहसा, तत्र ज्वलति पावके । तमक्षैप्सीच्छिशुं हा ! हा!, विदधत्सु द्विजन्मसु ॥ ५२९ ॥ त्रिभिर्विशेषकम् ॥ अथाऽकस्मात्सदम्भोजसम्पुटे विधृतः शिशुः । सुर्या कयाचित्सर्वज्ञमतोद्द्योतोद्यतात्मना ॥ ५३० ॥ विराध्य गुरुकर्मत्वात्सा हि पाश्चात्यजन्मनि । श्रामण्यधर्मं समभूत्सामान्या व्यन्तरी सुरी ॥ ५३१ ॥ तयाऽन्यदा च पृष्टोऽभूत्केवली भगवन्नहम् । सुप्रापबोधिर्नहि वेतीति सोऽप्यवदत्तदा ॥ ५३२ ॥ सुप्रापबोधिर्भवती, नूनमास्ते परं त्वया । यतनीयं विशेषेण, सम्यक्त्वोद्भावनाविधौ ॥ ५३३ ॥ ततः प्रभृत्यवधिना, वीक्षमाणा निरन्तरम् । ईदृक्कृत्येषु सर्वत्रावहिता तिष्ठति स्म सा ॥ ५३४ ॥ तया चालोक्य तं बालं, तयाम्भोजपुटे धृतम् । नैके द्विजादयोऽभूवन्मुक्ताऽसूया मतेऽर्हतः ॥ ५३५ ॥ मुग्धभट्टोऽपि हि प्राप्तः, सुतमादाय सद्मनि । सुलक्षणाया मुदितस्तद्वृत्तं सर्वमप्यवग् ॥ ५३६ ॥ साऽप्यवादीत्त्वया देवाऽविचारितमिदं कृतम् । सम्यक्त्वं किल तत्त्वार्थश्रद्धानं ह्युदितं जिनैः ॥ ५३७ ॥ येषां विशुद्धं तच्चास्ते, मिथःसाधर्मिकत्वतः । ते पक्षपातिनः प्रेत्य, स्युश्च सुप्रापबोधिकाः ॥ ५३८ ॥ साधर्मिकेभ्यो ह्यधिकः, स्नेहो येषां सुतादिषु । सिद्धान्तनीत्या नियतं, तेषां सम्यक्त्वसंशयः ॥ ५३९ ॥ उपयुक्ता ततो बालं, काचिच्छासनदेवता । भवितव्यतयाऽरक्षत्सम्यक्त्वोद्भावनाकृते ॥ ५४० ॥ जात्वज्वलिष्यच्चेद्देव्यनवधाने परं शिशुः । तर्ह्यतथ्यश्चाधुनिकोऽभविष्यत्किं वृषोऽर्हतः ? ॥ ५४१ ॥ यत्साधर्मिकसांनिध्यं, विनापीह निरन्तरम् । सम्यगेव निविष्टोऽर्हद्धर्मस्तत्त्वदृशां हृदि ॥ ५४२ ॥ श्रद्धानमेव

१ 'प्रेक्ष्याः' इत्यपि । २ धर्मः ।

सम्यक्त्वं, तत्त्वार्थानां हि वस्तुतः । चलाचलत्वे च हृदस्तदेव घटते कथम् ? ॥ ५४३ ॥ नूनं निश्चलधर्माणामीदृक् तद्वालचेष्टितम् । विमर्ष्टुमपि नो युक्तमास्तां तत्करणं पुनः ॥ ५४४ ॥ सुरासुरेन्द्रानुगतं, श्रीमन्तमजितप्रभुम् । कौशाम्ब्यां समवसृतं, निशम्यात्रान्तरे पुनः ॥ ५४५ ॥ मुग्धस्वभावं स्वपतिं, समयज्ञा सुलक्षणा । सम्यक्त्वधर्मे सुतरां, निश्चलीकर्तुमित्यवग् ॥ ५४६ ॥ युग्मम् ॥ आर्यपुत्र ! मदुक्तेऽत्र, प्रत्ययो हृदि ते न चेत् । तद्गत्वा पृच्छ कौशाम्ब्यां, सर्वज्ञमजितप्रभुम् ॥ ५४७ ॥ सम्यक् प्रत्येतुमथ तत्कौशाम्ब्यामेत्य सप्रियः । सोऽप्राक्षीत्तं पदैर्गूढैर्मन्वानः सर्ववेदिनम् ॥ ५४८ ॥ तत्किं स्वामिंस्तथेत्यत्र, भणत्येवमिति प्रभुः । द्विजेन कथमित्युक्तः, पुनराह जगद्गुरुः ॥ ५४९ ॥ श्रद्धानमेव सम्यक्त्वं, तत्त्वार्थानां यदुच्यते । मुग्धभट्टोऽथ सञ्जातप्रत्ययो मौनमाश्रितः ॥ ५५० ॥ परोपकृतिधीराद्यगणभृत्त्रिजगद्गुरुम् । परिषत्प्रतिबोधार्थं, वन्दित्वाऽथेति पृष्टवान् ॥ ५५१ ॥ पृष्टं किमेतत् ? किं चोक्तं?, स्वामिनाऽयं च को द्विजः ? । सर्वं तदाऽवदत्सर्ववेदी वृत्तान्तमादितः ॥ ५५२ ॥ तं च वृत्तान्तमाकर्ण्य, प्रबुद्धा वहवोऽङ्गिनः । मुग्धभट्टश्च सम्यक्त्वे, स्थिरतामासदत्तमाम् ॥ ५५३ ॥ सप्रियः सोऽथ वैराग्यात्, प्राव्रजत्परमार्थदृग् । महानन्दपदं प्राप्तः, क्रमेणोत्पन्नकेवलः ॥ ५५४ ॥ भर्त्तुर्वियोगे ह्यात्मानं, विषयस्मरणोन्मुखम् । सम्यग् धर्मोपनिषदं, विदित्वा विमला मुखात् ॥ ५५५ ॥ वशीकृत्याऽर्हकृत्येषु, व्यापारैर्वं च सर्वदा । सुलक्षणापि परमब्रह्मसम्पदमीयुषी ॥५५६॥ युग्मम् ॥

ततो भवभ्रमोद्विग्नैर्दुःखकर्मक्षयेच्छुभिः । यत्नः कार्योऽत्र भो भव्या !, जये सर्वात्मनात्मनः ॥ ५५७ ॥ धर्मतत्त्वं वद-

१ 'नित्यशः' इत्यपि । २ विचारयितुम् ।

त्येवं, सदस्याः सर्ववेदिनि । प्रबोधमापुर्बहवः, पद्मानीवारुणोदये ॥ ५५८ ॥ अत्रान्तरे नृपश्रेष्ठो, ललाटघटिताऽञ्जलिः । इति ज्ञानिनमप्राक्षीद्विपाकं प्राच्यकर्मणाम् ॥ ५५९ ॥ प्राज्यं राज्यं क्रमायातं, स्वामिन्! मम महौजसः । जग्राह कर्मणा केन, जयामात्याऽधमस्तदा ? ॥ ५६० ॥ कर्मणा केन च तदा, सती शृङ्गारसुन्दरी । विडम्बनाः कृतास्तेन, सहते स्म सुदुःसहाः ॥ ५६१ ॥ प्राच्यसत्कर्मणः कस्य, प्रसादेन मया पुनः । चटत्प्रकर्षाच्चैश्वर्यलक्ष्मीरियमवाप्यत ॥ ५६२ ॥ कुष्ठं कनकमञ्जर्याः, केनासीत् कर्मणा पुनः ? । अन्धता गुणमञ्जर्याः, केन चाऽभूद्गुणस्तयोः ? ॥ ५६३ ॥ देवानामपि दुष्प्रापः, सम्प्राप्तोऽयं महारसः । कर्मणा केन च मया ?, स्वामिन् ! सर्वमिदं वद ॥ ५६४ ॥ अथ सत्केवलालोकाऽऽलोकिताखिलविष्टपः । नृपप्रष्ठं मुनिश्रेष्ठः, स्पष्टमाचष्ट पर्षदि ॥ ५६५ ॥ तथाहि—

इहैव भरतक्षेत्रे, पुरा रत्नपुरे पुरे । सङ्ग्रामवीरः समभूद्रत्नवीरः क्षमापतिः ॥ ५६६ ॥ श्रीदेवीप्रमुखाः पापविमुखाः कुशलोन्मुखाः । वल्लभा विनयौचित्यविदस्तस्याऽभवन्नव ॥ ५६७ ॥ तत्र चाजन्मदारिद्र्यदुःखदग्धाशयावुभौ । अभूतां सिद्धदत्तश्च, धनदत्तश्च वाणिजौ ॥ ५६८ ॥ वहूपक्रान्तमेताभ्यामर्जनाय श्रियः परम् । न सम्पन्नाः क्वचित्सा यल्लक्ष्मीः कर्मानुसारिणी ॥ ५६९ ॥ अथान्यदा तयोस्तुल्यदुःखयोर्भविता कथम् ? । निर्वाहो नौ सनिश्वासमिति वार्त्तयतोर्मिथः ॥ ५७० ॥ सत्पुमान् कश्चिदित्याख्यदाशासिद्ध्यभिधा सुरी । लङ्घनैर्नूनमाराद्धा, दारिद्र्यं वां दलिष्यति ॥ ५७१ ॥ तद्वचःप्रत्ययात्ताभ्यामथ स्वेष्टार्थसिद्धये । एकाग्रभावेनाराद्धा, विंशत्या लङ्घनैर्हि सा ॥ ५७२ ॥ प्रत्यक्षीभूय साऽप्यूचे, देयं लभ्यं च किन्तु नः । एवं यदेत्य मद्गेहे, लङ्घथः साम्प्रतं युवाम् ॥ ५७३ ॥ तदाहतुस्तौ विनयाद्देयं लभ्यं च नाऽत्र नौ ।

दारिद्र्यदूनौ त्वद्यावां, त्वामम्ब ! शरणं श्रितौ ॥ ५७४ ॥ मातुरङ्कमामण्ड्य, यथेष्टं याचते शिशुः । सा तस्मै च मुदा दद्याद्देयं लभ्यं च तत्र किम् ? ॥ ५७५ ॥ स्वेष्टं त्वत्तोऽम्ब ! लब्ध्वा, मार्गयावस्तथाऽधुना । नूनं स्वापत्ययोस्तच्च, वत्सलत्वेन दास्यसि ॥ ५७६ ॥ इत्युक्तिहृष्टा साऽप्याख्यद्वत्सौ ! लक्ष्मीविवेकयोः । याच्यमन्यतरद्वस्तु, न दास्ये युवयोर्द्वयम् ॥ ५७७ ॥ सिद्धदत्तस्तदा लुब्धमनाः कर्मानुसारिधीः । अयाचिष्टेहलोकार्थमात्रार्थी परमां रमाम् ॥ ५७८ ॥ कर्मानुभावात्सुमतिः, स्वल्पलोभः शुभायतिः । विवेकं धनदत्तश्च, प्रार्थयामास तां सुरीम् ॥ ५७९ ॥ यादृशं यस्य सत्तायां, वेद्यं कर्म शुभाऽशुभम् । उत्पद्यते मतिस्तस्य, तादृशी हि शुभाशुभा ॥ ५८० ॥ यदुक्तम्—

"यथा यथा पूर्वकृतस्य कर्मणः, फलं निधानस्थमिवोपतिष्ठते । तथा तथा तत्प्रतिपादनोद्यता, प्रदीपहस्तेव मतिः प्रवर्त्तते" ॥१॥

अथार्थितं तयोर्देवी, प्रतिपद्य तिरोहिता । स्वस्वसद्मैत्य मुदितौ, चक्रतुस्तौ च पारणम् ॥ ५८१ ॥ देवीवरप्रणुन्नोऽथ, कश्चिन्मध्यन्दिनेऽन्यदा । योगी समागात्साम्नायः, सिद्धदत्तस्य सद्मनि ॥ ५८२ ॥ बाढमावर्जितस्तेन, तथैवातिथ्यकर्मभिः । तस्मै स त्रपुपीबीजान्यार्पिपत्स च योगिराट् ॥ ५८३ ॥ भावितानि मयैतानि, सिद्धमन्त्रेण सादरम् । तद्वत्स ! विधिनोप्तानि, रोहन्त्येतानि तत्क्षणम् ॥ ५८४ ॥ वल्लीवितानः स्तृणुते, घटीयुग्मेन मण्डपम् । जायन्ते परितस्तत्र, तत्कालं च फलान्यपि ॥ ५८५ ॥ व्यधुश्चैतान्यनाहार्यमाधुर्येण सुधामधः । एतैरास्वाद्यमानैश्च, क्षुत्तृट्पीडा प्रशाम्यति ॥ ५८६ ॥ सन्निपाताः समे वाताः, सर्वे रोगाश्च चक्षुषः । कुष्ठान्यष्टादशाप्याशु, शाम्यन्त्यास्वादितैश्च तैः ॥ ५८७ ॥

१ 'मातस्त्वादिष्टं लब्ध्वा' इत्यपि । २ 'भूरिशः' इत्यपि ।

इत्युक्त्वा च गतो योगी, सिद्धदत्तोऽथ सद्मनि । तानि बीजानि कतिचिद्वाटके विधिनोप्तवान् ॥ ५८८ ॥ तत्कालमुद्गता वल्यो, विस्तृताश्चाशु मण्डपे । फलिताश्च फलैराप्तवाणी नहि मृषा क्वचित् ॥ ५८९ ॥ शतं सहस्रं लक्षं वा, समर्प्यास्माद-थादरात् । तानि गृह्णन्ति धनिनो, दुष्टव्याधिभिरर्दिताः ॥ ५९० ॥ रोगार्दितेभ्यो लोभेन, धनैस्तैः स्वैरमाहृतैः । सिद्ध-दत्तोऽथ समभूद्धनवानचिरादपि ॥ ५९१ ॥ अथ तस्य गृहे वित्तमवर्धिष्ट यथा यथा । हृदीव स्पर्द्धया लोभो, वर्धते स्म तथा तथा ॥ ५९२ ॥ यथा लाभस्तथा लोभो, वर्धते ह्यधिकाधिकः । न रैकोव्याऽपि यत्तृप्तो, द्विमाषाऽर्थी पुरा द्विजः ॥ ५९३ ॥ तथा चोक्तं सिद्धान्ते—

"जहा लाहो तहा लोहो, लाहा लोहो पवड्ढई । दोमासकणयकज्जं, कोडीएऽवि न निट्ठिअम्" ॥ १ ॥

अन्यत्राप्युक्तम्—

"तृष्णाखानिरगाधेयं, दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः, पूरणैरेव खन्यते ॥ १ ॥"

ततो लोभाभिभूतात्मा, सिद्धदत्तोऽन्यदा निशि । यामे प्रबुद्धः पाश्चात्ये, चिन्तयामास चेतसि ॥ ५९४ ॥ मच्चित्तेष्टं कथं वित्तं, लाभैर्मेलिष्यतीदृशैः । घटा नूनमवश्यायैर्भ्रियन्ते नहि कुत्रचित् ॥ ५९५ ॥ तदनर्गलवित्ताप्त्यै, पोते गच्छामि साम्प्रतम् । अश्वैः पोतैरश्मभिर्वा, यल्लक्ष्मीरतिशायिनी ॥ ५९६ ॥ इति चित्ते स निश्चित्य, वित्तार्थी प्रातरुत्थितः । परद्वी-पोचितैः पण्यैर्वहनं भृतवान् द्रुतम् ॥ ५९७ ॥ अथाऽस्य विमलो बाल्यवयस्यः शस्यवाग्मनाः । पारिणामिकधीरास्ते, स

१ " यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्धते । द्विमाषकनककार्यं, कोट्याऽपि न निष्ठितम् " ॥ इति च्छाया ।

तदा हि तमित्यवग् ॥ ५९८ ॥ आस्तां दूरे धनं वन्धो !, त्यागभोगप्रवर्त्तकम् । पुरा भोजनमप्येकदिनस्यासीन्न ते गृहे ॥ ५९९ ॥ साम्प्रतं तव सम्पन्नं, यदि पुण्यैरियद्धनम् । प्राणान्तकष्टे तत्पोते, किं लोभाद्व्रजसि स्वयम् ?॥ ६०० ॥ पोते प्राणान्तकष्टेऽपि, यान्ति युक्तं हि दुर्गताः । यतस्ते हृदि मन्यन्ते, दारिद्यान्मरणं सुखम् ॥ ६०१ ॥ यदुक्तम्—

"उत्तिष्ठ क्षणमेकमुद्वह सखे ! दारिद्र्यभारं मम, श्रान्तस्तावदहं चिराच्च शरणं सेवे त्वदीयं सुखम् ।

इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशानं शवो, दारिद्र्यान्मरणं परं सुखमिति ज्ञात्वा स तूष्णीं स्थितः" ॥ १ ॥

चिकीर्षवः स्वनिर्वाहं, सुखैर्दुःखैर्यथा तथा । आदायाऽपरवित्तानि, यान्तु पोते वुभुक्षिताः ॥ ६०२ ॥ व्याप्रियन्ते तु धनिनो, येऽत्र सक्लेशकर्मसु । भोगत्यागवियुक्तास्ते, दैवकर्मकृतो ध्रुवम् ॥ ६०३ ॥ शास्त्रे सुधीभिरुदरं, नूनं दुष्पूरमुच्यते । तुष्येदिष्टान्नभुक्तौ तु, तदपि प्रहरद्वयम् ॥ ६०४ ॥ असंख्यैः स्वर्णरत्नाद्यैराहारैश्चातिपेशलैः । मनस्तु लुब्धप्रकृति, क्षणं जातु न तुष्यति ॥ ६०५ ॥ सन्त्वन्यसंख्याः स्युः प्रौढाश्चेन्मणिस्वर्णराशयः । तथापि तुष्टिः पुष्टिर्वा, पुंसामेवाशनादिभिः ॥ ६०६ ॥ तन्निर्वाहोचिते वित्ते, क्लिश्यन्ते किं मुधा जडाः[1] ? । अप्यद्भुतधनावाप्तौ, लोभस्यान्तो हि न क्वचित् ॥६०७॥

यदुक्तम्—

"धनहीनः शतमेकं, सहस्रं शतवानपि । सहस्राधिपतिर्लक्षं, कोटिं लक्षेश्वरोऽपि च ॥ १ ॥
कोटीश्वरो नरेन्द्रत्वं, नरेन्द्रश्चक्रवर्त्तिताम् । चक्रवर्त्ती च देवत्वं, देवोऽपीन्द्रत्वमिच्छति ॥ २ ॥

१ 'मूर्खाः क्लिश्यन्ति किं मुधा' इत्यपि ।

इन्द्रत्वेऽपि हि सम्प्राप्ते, यदीच्छा न निवर्त्तते । मूले लघीयांस्तल्लोभः, शराव इव वर्द्धते" ॥ ३ ॥

महीयसाऽपि लाभेन, लोभो न परिभूयते । जीयेत मात्राहीनेन, मात्रा समधिकः कथम् ? ॥ ६०८ ॥ अतिलोभो नृणां नूनं, महानर्थाय जायते । अकाण्डे श्रेष्ठिनः श्रृङ्गदत्तस्याऽभूद्यथा पुरा ॥ ६०९ ॥ स श्रृङ्गदत्तो गदितः, कोऽतिलोभनिदर्शनम् । सिद्धदत्तेनेति पृष्टस्तद्वृत्तं सोऽखिलं जगौ ॥ ६१० ॥ तथाहि—

नगरे रोहणे नानापुंरत्नोत्पत्तिरोहणे । समभूच्छृङ्गदत्ताख्यो, व्यवहारी महाधनः ॥ ६११ ॥ उत्तमाखिललोकेऽत्र, नीलीवन्मलिनात्मकम् । हर्त्तुं दृग्दोषममुकं, मन्ये विधिरवासयत् ॥ ६१२ ॥ द्वात्रिंशत्स्वर्णकोटीशोऽप्यन्वहं स गतत्रपः । लोभाभिभूतः सामान्यकृत्यानि सृजति स्वयम् ॥ ६१३ ॥ वयस्थाः सन्तिः चत्वारस्तनया विनयान्विताः । चतस्रस्तस्य तारुण्यभरमाप्ताः स्नुषाः पुनः ॥ ६१४ ॥ स व्यवहारिकाचारद्रविणव्ययभीरुहृत् । गृहे दत्ते तु न स्थातुं, किञ्चित्कार्यमिषात्सुतान् ॥ ६१५ ॥ चैत्ये पौपधशालायां, विवाहे च चतुष्पथे । नैति वित्तव्ययाद्बिभ्यत्समुदाये च स क्वचित् ॥ ६१६ ॥ मा विक्षत्कोऽपि भिक्षार्थी, मत्सद्मेति भयेन सः । द्वारे कपाटद्वितयं, दत्ते तत्राऽर्गलां पुनः ॥ ६१७ ॥ मार्गणानां मार्गयतां, दत्ते गालीः स निष्ठुराः । प्रसह्याऽन्तः प्रविशतां, तेषां च गलहस्तकम् ॥ ६१८ ॥ सदापि हृदि वित्तार्थचिन्तार्त्तो विलिखन् भुवम् । कपोलहस्तकं दत्ते, स श्लथीभूतकन्धरः ॥ ६१९ ॥ इति प्रायः प्रतिदिनं, पञ्च दानानि ददात्ययम् । तथाप्यदाता प्रथितो, यशः पुण्यैरवाप्यते ॥ ६२० ॥ द्वारे प्रवेष्टुं कार्पण्याश्रित्यं द्वास्थ इवार्थिनाम् ।

स्नुषाश्वाऽसूयया जातु, निःसर्तुं न ददाति सः ॥ ६२१ ॥ नृपचौरनिधीशानां, कोशाध्यक्षोऽत्र निर्ममे । वेधसा कृपणो दातृगुणाभिव्यक्तये ध्रुवम् ॥ ६२२ ॥ यदुक्तम्—

"विना कदर्यं दातापि, नाऽभविष्यत्प्रसिद्धिमान् । निशां विना कथं नाम, वासरोऽयमितीष्यते ?" ॥ १ ॥

म्लेच्छगेहमिवाऽस्पृश्यं, त्याज्यं चण्डालकूपवत् । रथ्यानीरवदश्लाघ्यं, तत्सद्माभूच्छनैः शनैः ॥ ६२३ ॥ यत उक्तम्—

"किंशुके किं शुकः कुर्यात्, फलितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि, विदधत्यर्थिनः किमु ?" ॥ १ ॥

यौवनोच्छृङ्खलास्तत्र, काराक्षिप्ता इवाथ ताः । कालं नयन्ति कष्टेन, मिथः सख्यजुषः स्नुषाः ॥ ६२४॥ तं वीक्ष्य श्रेष्ठिनं द्वारे, मूर्त्तं पापमिवान्यदा । व्योमाध्वनागात्प्रच्छन्नं, सद्मान्तः कापि योगिनी ॥६२५॥ अकस्मादागतां तत्र, तामालोक्य स सम्भ्रमम् । उत्तस्थुः सम्मुखं सर्वास्ताः स्नुषाः प्रोचिरे च ताम् ॥ ६२६ ॥ किं पाश्चात्यभवाऽरातिः, श्वशुरः स मृतोऽद्य नः ? । यदस्मत्सुकृताकृष्टा, मातरन्तरिहागमः ॥ ६२७ ॥ सगर्वं साप्यवग् वत्सा !, नानामन्त्रौषधीविदाम् । न नः किमपि दुस्साधं, दुर्गमं च जगत्यपि ॥ ६२८ ॥ कलाकौटिल्यकुशलामथ तामाकलय्य ताः । प्रीणयित्वा बहुविधातिथ्यैरिति बभाषिरे ॥ ६२९ ॥ मातराशैशवादत्र, क्षिप्ताः कारागृहे वयम् । साम्प्रतं शरणं प्राप्ता, भवतीमादियोगिनीम् ॥ ६३० ॥ विचित्राऽऽश्चर्यविपुलां, विपुलां कथमप्यमूम् । प्रसीद दर्शयास्माकं, तत्कलाकुशलेऽधुना ॥ ६३१ ॥ एभिः सभक्तिवचनैर्भृशमानन्दिताऽथ सा । दत्ते स्म तासां साधारां, विद्यां गगनगामिनीम् ॥ ६३२ ॥ ततश्चित्ते प्रमुदिताश्चु-

१ 'स्नुषाणा चेर्ष्यया' इत्यपि ।

दिता इव बन्धनात् । चतस्रोऽपि हि ता वध्वः, सर्वाभरणभूषिताः ॥ ६३३ ॥ वाटकस्थं महत्काष्ठमारुह्य शुषिरं शनैः । सन्नसर्वजने सुप्ते, स्वर्णद्वीपे ययुर्निशि ॥ ६३४ ॥ युग्मम् ॥ विविक्तेऽथ क्वचित्स्थाने, तत्र काष्ठं विमुच्य ताः । सुरक्रीडापुरस्यान्तर्विविशुः कौतुकोत्सुकाः ॥ ६३५ ॥ तत्र च स्फारशृङ्गारानिन्द्रादीन् क्रीडतः सुरान् । नृत्यं चाप्सरसां रम्यं, स्वेच्छया ता व्यलोकयन् ॥ ६३६ ॥ काष्ठं तदेव चारुह्य, निशान्त्यप्रहरे रहः । स्वसद्मैत्य यथास्थानं, सुषुपुस्ताः सकैतवाः ॥ ६३७ ॥ यौवनेनोद्धताः स्वेच्छाविहाराभिरताश्च ताः । एवं केनाऽपि विदिताः, गच्छन्त्यायान्ति चानिशम् ॥ ६३८ ॥ यैः स्वबुद्ध्याम्बुधेरम्बु, प्रमातुं पार्यते पलैः । स्त्रीचरित्रं हि गहनं, न सम्यग् बुध्यतेऽपि तैः ॥ ६३९ ॥ यदुक्तम्—

"अश्वप्लुतं माधवगर्जितं च, स्त्रीणां चरित्रं भवितव्यतां च ।
अवर्षणं चापि च वर्षणं च, देवा न जानन्ति कुतो मनुष्याः ? " ॥ १ ॥

प्राप्तुं पारमपारस्य, पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः ॥ ६४० ॥ ( यदुक्तम् )

"विहिविलसिआण खलभासिआण तह कूडमहिलचरिआण । मणवंछिआण पारं, जाणइ जइ होइ सवन्नू" ॥ १ ॥

अथान्यदा श्रेष्ठिनोऽस्य, भुजिष्यः कुशलाभिधः । सुमहत्काष्ठमन्योन्यस्थाने नित्यमवेक्ष्य तत् ॥ ६४१ ॥ को न्वियच्चालयत्येतद्वीक्षेऽद्येति विचिन्त्य सः । निशीक्षमाणो निभृतं, वधूवृत्तमबुद्ध तत् ॥ ६४२ ॥ युग्मम् ॥ सदैवैताः क्व यान्तीति ?, जिज्ञासुः स च कौतुकी । प्रच्छन्नः प्राक् प्रविश्याऽस्थाद्रात्रौ तत्काष्ठकोटरे ॥ ६४३ ॥ प्राग्वत्तत्काष्ठमारुह्य, तन्नि-

१ "विधिविलसितानां खलभाषितानां तथा कूटमहिलाचरितानाम् । मनोवाञ्छितानां पारं, जानाति यदि भवति सर्वज्ञः" ॥ इति च्छाया ।

श्यपि नभोऽध्वना । विहृत्य स्वेच्छया स्वर्णद्वीपतो गृहमाययुः ॥ ६४४ ॥ प्रच्छन्नः सोऽपि तद्वृत्तं, सर्वं ज्ञात्वा यथास्थितम् । लात्वा स्वर्णेष्टकायुग्मं, तथैवागत्य सुप्तवान् ॥ ६४५ ॥ तासां तेनाऽत्यसंभाव्यचरित्रेण चमत्कृतः । एवं च चिन्तयामास, स चित्ते चतुरश्चिरम् ॥ ६४६ ॥ नारी यदवला मुग्धा, मधुरं चोच्यते विषम् । तन्मन्ये वैपरीत्योत्थलक्षणाया निदर्शनम् ॥ ६४७ ॥ मुग्धाभिरपि नारीभिर्वञ्च्यन्ते हि विचक्षणाः । अवलाभिरपि क्षिप्रं, जीयन्ते च महौजसः ॥ ६४८॥ रक्षतीतीर्ष्यया श्रेष्ठी, द्वारस्थः सर्वदाप्यमूः । स्वैरं विहृत्य सर्वत्राऽऽयान्ति त्वेताः स्वविद्यया ॥ ६४९ ॥ उच्छृङ्खलत्वे मनसः, स्त्रीणां दुष्टात्मनां ततः । व्यर्थो रक्षाविधिर्वाह्यो, लोकेऽपीति यदुच्यते ॥ ६५० ॥

"मनो निबद्धं न स्त्रीणां, किं बद्धो मूढ ! कम्बलः । तासां स्वेच्छाप्रवृत्तौ हि, किं कुर्यात्कम्बलो बलम् ?" ॥ १ ॥

महाकविभिरित्युक्तम्—

"कल्लोलैः सह पांशुखेलनतया लोलेयमित्याशयादेकस्तम्भसरोजसौधकुहरे सिन्धोः सुता शौरिणा ॥
यन्यस्ताऽपि पितामहप्रहरके हा ! नित्यमिन्दोः करैर्निर्यात्यर्ककरैरुपैति च नमो नारीचरित्राय तत्" ॥ १ ॥

तन्नारीरसदाचाराऽध्वनो नूनं निवर्त्तयेत् । कुलमेवार्गलीभूयाऽथवा दुर्गतिदुःखभीः ॥ ६५१ ॥ जागरित्वेति स चिरं, सुप्तः स्वर्णाप्तिगर्वितः । शब्दितः श्रेष्ठिनाप्येत्य, प्रातर्नोत्तरमप्यदात् ॥ ६५२ ॥ प्राक् स्वयं बुध्यते काले, वादितो वक्ति च द्रुतम् । किं जागर्ति न वाऽद्यायं ?, जाग्रद् वा किं न जल्पति? ॥ ६५३ ॥ गर्वितस्तात्किमद्यायं ?, किञ्चिन्नव्यधनाप्तितः । उच्चावचवचोभिर्वा, किं केनाप्येष रोषितः ? ॥ ६५४ ॥ रोगार्त्तः किमु वेत्यादि, निर्णिनीषुः स दाम्भिकः । स्वहस्तेन तमु-

स्थाप्य, साश्रुदृष्टिस्तदेत्यवग् ॥ ६५५ ॥ त्वं मे चतुर्णां पुत्राणां, स्नेहपात्रं हि पञ्चमः । तदद्यानीदृश इवालोक्यसे वत्स ! किं वद ? ॥ ६५६ ॥ तैः स्नेहवचनैरार्द्रीभूतहृच्छ्रेष्ठिनेऽथ सः । निखिलं तद्वधूवृत्तं, यथादृष्टमवोचत ॥ ६५७ ॥ निशम्य तदसंभाव्यं, स्वयमीक्षितुमुत्सुकः । तं वासरं शरत्प्रायं, तदा श्रेष्ठी ह्यमन्यत ॥ ६५८ ॥ आसन्नमरणः सोऽथ, कपटी तस्क्रुजिष्यवत् । निशि प्रविश्य प्रच्छन्नं, तस्थौ तत्काष्ठकोटरे ॥ ६५९ ॥ तन्निश्यपि स्नुषाः प्राग्वसदारुह्य नभोऽध्वना । स्वर्णद्वीपे ययुः काष्ठं, मुक्त्वा च विविशुः पुरे ॥ ६६० ॥ श्रेष्ठी लोभाभिभूतश्च, तदा निर्गत्य कोटरात् । स्वर्णेष्टकाभिर्नैकाभिरभार्षीत् कोटरं हि तत् ॥ ६६१ ॥ लब्धद्रव्यागमोपायहृष्टस्तत्कोणके क्वचित् । वध्वागमनवेलायां, निलीयास्थाच्च पूर्ववत् ॥ ६६२ ॥ कृतार्थास्तावदागत्य, तदारुह्य च सत्वराः । अब्धेरुपरि ता व्योम्नि, चेलुः स्वनगरं प्रति ॥ ६६३ ॥ तत्काष्ठं पथ्यभूत्तासां, भूरिभारात्सुदुर्वहम् । ततो भानूदयाऽऽसन्न्या, विषण्णास्ता मिथोऽवदन् ॥ ६६४ ॥ मुच्यतेऽद्य स्वसः! काष्ठमेतद्दुर्वहमम्बुधौ । आदास्यते श्वः सुवहं, काष्ठमन्यत् पुनर्लघु ॥ ६६५ ॥ कोटरस्थस्तदा श्रेष्ठी, तन्निशम्य वचः स्नुषाः । मामज्ञात्वाऽत्र मध्यस्थमेतन्मा क्षेप्सुरम्बुधौ ॥ ६६६ ॥ इति विभ्यन्मनाः प्रोचे, मध्येऽहं श्वशुरोऽस्मि वः । तत्काष्ठमेतज्जलधौ, स्नुषा मा मुचताऽधुना ॥ ६६७ ॥ युग्मम् ॥ तं ज्ञात्वा काष्ठमध्यस्थं, मनसि क्षुभिता भृशम् । बुद्ध्यैवं पारिणामिक्या, व्यमृशन्नथ ता मिथः ॥ ६६८ ॥ सम्यग्ज्ञातात्मदुर्वृत्तो, जीवन्नद्य गतो गृहम् । नूनं शुभाय भविता, दुरात्मा नायमात्मनाम् ॥ ६६९ ॥ स सर्पघटवत्क्षिप्रं, तदयं क्षिप्यतेऽम्बुधौ । ईदृग् विलोक्यमानो हि, न प्राप्योऽवसरः परः ॥ ६७० ॥

१ 'मचीकथत्' इत्यपि ।

ततः प्रक्षिप्य तं तत्र, स्वं दुष्कर्मेव मूर्त्तिमत्। आसंस्ताः सुखिताः स्वेच्छत्यागभोगैश्चिरं गृहे ॥ ६७१ ॥ संगृह्य भूयसीः स्वर्णेष्टका लोभेन भूयसा। द्वात्रिंशत्स्वर्णकोटीशो, यथा भ्रष्टः स्वजन्मनः ॥ ६७२ ॥ प्राणान्तकष्टे तत्पोते, भूरिलोभाच्चटंस्तथा। अप्यपत्यधनायुर्भ्यः, कर्हिचिन्मित्र! मा भ्रशः॥ ६७३ ॥ तवासप्तमसन्तानभोग्यमास्ते धनं गृहे। हा! कष्टं कष्टमीदृक्षं, तत्किमाद्रियसेऽधुना?॥ ६७४ ॥ सुखं निषण्णः स्वगृहे, वित्तैर्वित्तमुपार्जयन्। त्यागभोगैर्निजं जन्म, कृतार्थय महाशय! ॥ ६७५ ॥ मित्रेणैवं वहूक्तोऽयं, नानादृष्टान्तयुक्तिभिः। परं विवेकवैकल्यात्किञ्चिन्नाऽमंस्त तद्धितम् ॥ ६७६ ॥ अथातितृष्णातरलः, कृतकौतुकमङ्गलः। पोतमारुह्य जलधौ, स ययौ मन्दिरे क्वचित् ॥ ६७७ ॥ व्यवहृत्य चिरं तत्र, प्राप्तातुलधनश्च सः। ववले सपरीवारस्तथैव स्वपुरं प्रति ॥ ६७८ ॥ तस्मिन्नीप्सितलाभाप्त्या,हृष्टेऽथायाति वर्त्मनि। दुर्दैवनुन्नैर्दुर्वातैरकस्मादब्धिरक्षुभत् ॥ ६७९ ॥ लोला अकस्मात्कल्लोलाः, करालाकृतयस्तदा। श्मशान इव वेतालास्तत्रोत्तस्थुः पदे पदे ॥ ६८० ॥ पोतस्तैरुत्पतन्नुच्चैः, सद्यः स्वर्गं व्रजन्निव। मर्त्यैरतर्कि निपतन्, पातालं प्रविशन् पुनः॥ ६८१ ॥ सिद्धदत्तादिभिस्त्यक्तजीविताशैस्तदा द्रुतम्। क्षिप्तं पोतं लघूकर्त्तुं, पण्यं निःशेषमम्बुधौ ॥ ६८२ ॥ लघूभूतोऽथ तत्पोतो, वायुनोत्पाट्य तूलवत्। भवितव्यतया शून्यद्वीपे क्वचिदनीयत ॥ ६८३ तत्तटं प्राप्य सञ्जातजीविताशाः प्रमोदिनः। सिद्धदत्तादयः सर्वे, तदा तत्रोदतारिषुः ॥ ६८४ ॥ भोज्ये क्षीणे स्वलोकानां, निर्वाहार्थमथोप्तवान्। तानि त्रपुष्या वीजानि, सिद्धदत्तस्तटक्षितौ ॥ ६८५ ॥ तत्कालमुद्गता वल्लयः, प्रवृद्धाः फलिताश्च ताः। स्वादयन्तः फलान्यासां, सुखिनश्चाऽभवञ्जनाः ॥ ६८६ ॥ निर्गत्याथान्यदाऽम्भोधेस्तत्रैका जलमानुषी। आगमद्भिप्सती तानि, फलान्यत्तुं शनैः शनैः ॥ ६८७ ॥ पाणावादाय पोतस्थं, रत्नमेकं प्रदर्शयन्। तां फलान्यदर्तीं

धूर्त्तः, सिद्धदत्तो निषिद्धवान् ॥ ६८८ ॥ तद्देवीवरमाहात्म्यात्साप्यजानादिति स्फुटम् । मर्त्योऽयमीदृग्रत्नानि, फलमूल्यं हि याचते ॥ ६८९ ॥ ततः प्रविश्य चाम्भोधौ, गृहीत्वा विविधान् मणीन् । तत्रैत्य फललोभेन, सिद्धदत्ताय सार्पिपत् ॥ ६९० ॥ तस्मै फलानि तावन्ति, तदा तानि स दत्तवान् । फलान्यस्मै ददात्येवं, रत्नान्यादाय सोऽन्वहम् ॥ ६९१ ॥ एवं क्रमेण विश्वासादन्योन्यैर्जलमानुषैः । तस्मै तत्फलमूल्येन, मणयः कोटिशोऽर्पिताः ॥ ६९२ ॥ मेलितैर्मणिभिर्भृत्वा, तं पोतमथ भूरिभिः । मुदितः स्वपुरं प्राप, सिद्धदत्तः शुभेन सः ॥ ६९३ ॥ कोटिशो वीक्ष्य रत्नानि, रत्नवीरेण भूभुजा । अथाऽऽज्ञा लुब्धचित्तेन, तत्पोते त्वरितं ददे ॥ ६९४ ॥ मया मत्वा तृणं प्राणानवगाह्य महार्णवम् । हा ! कष्टेनार्जिता लक्ष्मीरियमद्यागमद्वृथा ॥ ६९५ ॥ चेन्माता तु विषं दत्ते, विक्रीणाति[1] पिता सुतम् । राजा हरति सर्वस्वं, का नु तत्र प्रतिक्रिया ? ॥ ६९६ ॥ त्रुटिताशं मनस्येवं, सिद्धदत्ते विषीदति । दिने त्रयोदशेऽथाज्ञां, स्वयमेवाऽमुचन्नृपः ॥ ६९७ ॥ सिद्धदत्तस्ततो हृष्टः, पोतादुत्तार्य तान्मणीन् । विक्रीय चासीत् षट्षष्टिस्वर्णकोटीश्वरः पुरे ॥ ६९८ ॥ निर्विवेकस्तु मिलति, क्वचिन्नैष महाजने । स्वलक्ष्मीगर्वितश्चैतं, तृणायापि न मन्यते ॥ ६९९ ॥ नापि[2] व्ययति क्वापि, धर्मे काणकपर्दिकाम् । तनुते स्वजनादीनामपि नोपकृतिं मनाक् ॥ ७०० ॥ न महत्यर्हतो जातु, गुरूंश्चापि न वन्दते । वित्तैकचित्तः पशुवत्, स्वजनुर्गमयत्यसौ ॥ ७०१ ॥ स क्रमान्निर्विवेकत्वाद्विमुक्तो विनयादिभिः । द्वेष्यो महाजनस्याऽभूदक्षिपट्ट इवान्वहम् ॥ ७०२ ॥ देवीवरानुभावेनोत्पन्नाऽमलविवेकधीः । त्रिसन्ध्यं धनदत्तस्तु, पूजयत्यर्हतः सदा ॥ ७०३ ॥

१ 'विक्रीणीते' इति स्यात् । २ 'कचिद्व्ययति धर्मादौ, नापि' इत्यपि ।

स धर्म्मं सद्गुरोः सम्यक्, श्रद्धालुः शृणुतेऽन्वहम् । महाकार्येऽपि न समं, केनचित्कलहायते ॥ ७०४ ॥ प्राणातिपाताद्विरतो, न मृषा जातु भाषते । वित्तं नाऽदत्तमादत्ते, स परस्त्रीपराङ्मुखः ॥ ७०५ ॥ दूरं त्यजति सप्तापि, व्यसनानि विशुद्धहृत् । महाजनान्तः स मिलंस्तदुक्तं तनुतेऽखिलम् ॥ ७०६॥ दयालुर्दीनदुस्थादौ, परोपकृतिकर्मठः । सोऽल्पवित्तोऽप्युदात्तात्मा, पात्रे दत्ते यथोचितम् ॥ ७०७ ॥ परकार्यैककुशलः, परर्द्धि[1]ष्वमत्सरी । स्वजनुः सदनुष्ठानैस्तनुते स फलेग्रहि ॥ ७०८ ॥ सम्यग्विवेकाविर्भावोल्लसितैर्विनयादिभिः । अन्यैरपि गुणैश्चासीदिष्टः शिष्टजनेषु सः ॥ ७०९ ॥ अथान्यदा पुरे तत्र, कश्चिद्वैदेशिको वणिग् । असाध्यव्याधिना ग्रस्तो, निशि शून्यमठे मृतः ॥ ७१० ॥ तत्संस्काराय मिलितः, सर्वस्तत्र महाजनः । धनदत्तोऽपि तत्राऽगाद्विवेकोद्दिष्टसत्पथः ॥ ७११ ॥ निर्विवेकधनोन्मादविस्मृतात्मा तु तत्र सः । सिद्धदत्तो हि न प्राप्तस्तेनात्याकारितो बहु ॥ ७१२ ॥ श्मशानेऽथ तमादाय, प्राप्तः सर्वो महाजनः । न त्वज्ञातकुलस्यास्य, कश्चिद्दत्ते हुताशनम् ॥ ७१३ ॥ विमृश्याऽथ मिथोऽवादीद् , धनदत्तं महाजनः । सौम्य ! त्वमस्मदादेशादस्य संस्कारमातनु ॥ ७१४ ॥ महाजनं विदन् क्ष्मापमिवाऽनुल्लङ्घ्यशासनम् । धनदत्तोऽनुमेने[2] तत् , तदा तद्वचनं सुधीः ॥ ७१५॥ निश्चिन्तो धनदत्तेन, तत्कार्यप्रतिपत्तितः । महाजनस्तु सकलो, दूरे गत्वा निषेदिवान् ॥ ७१६ ॥ शवं चितायां प्रक्षिप्य, सोऽपाकुर्वन्नथांऽशुकम् । ग्रन्थौ निबद्धमैक्षिष्ट, तत्कव्यां रत्नपञ्चकम् ॥ ७१७ ॥ आत्मसाक्ष्यपि तद्वीक्ष्य, नादत्तं ग्राह्यमुत्तमैः । इति हार्दविवेकेन, नाग्रहीष्ट स निःस्पृहः ॥ ७१८ ॥ पश्चाप्यऽदर्शयत्तानि, स त्वाकार्य महाजनम् । तदा तमा-

१ 'वृद्धि' इत्यपि । २ 'ऽनुमेनानः' इत्यपि ।

रुयत्सोऽप्येवं, तन्निर्लोभत्वविस्मितः ॥ ७१९ ॥ त्वमेवैतान्यनर्घ्याणि, गृहाण वचनेन नः । नाऽदत्तादानदोषस्ते, नूनमित्थं लगिष्यति ॥ ७२० ॥ युग्मम् ॥ अनाथमीदृग् भूभर्तृसम्बधि निखिलं धनम् । इत्याविर्भूतसद्बुद्धिर्नाऽग्रहीष्ट तथापि सः ॥ ७२१ ॥ उक्त्वाऽथ वृत्तं तद्राज्ञे, ददौ तानि महाजनः । तन्निर्लोभत्वहृष्टश्च, धनदत्ताय सोऽप्यदात् ॥ ७२२ ॥ ततः क्ष्मापार्पितान्येष, सुधीस्तान्यग्रहीन्मुदा । विक्रीणीते स्म पञ्चापि, स्वर्णलक्षैश्च पञ्चभिः ॥ ७२३ ॥ यच्छुभं सुदिनं कुर्यात् , प्राच्यपुण्योपढौकितम् । नहि माता पिता भ्राता, सुहृत्स्वामी च तन्नृणाम् ॥ ७२४ ॥ दुष्कर्मोपस्थितं घोरं, यत्कुर्याच्चादिनं नृणाम् । विरूपं व्यालवैतालादयो रुष्टा न जातु तत्॥ ७२५ ॥ प्रसरेत्काश्चिदाप्याब्धिः, काश्चिच्चाऽपसरेत्तिथीः । दिनादिनकृतस्तत्र, विशेषो वीक्ष्यते स्फुटः ॥ ७२६ ॥ चीयते विधुरेकत्र, पक्षेऽन्यत्र च हीयते । दिनादिनफलं देवेष्वपीदं का कथा नृणाम् ? ॥ ७२७ ॥ व्यापारव्यवसायादि, किञ्चित्कार्यं ततो महत् । सुधीश्चिकीर्षुः स्वदिनादिने पूर्वं परीक्षते ॥ ७२८ ॥ विमृश्यैवमथ प्रौढव्यवसायचिकीरसौ । स्वदिनादिनवीक्षार्थमजां प्रथमतोऽग्रहीत् ॥ ७२९ ॥ अल्पवृष्टौ यथा ह्यल्पमात्रः पङ्कोऽपि जायते । अल्पाहाराऽशने नूनमल्पैवाऽपि विसूचिका ॥ ७३० ॥ अल्पैव हि वपुष्पीडाप्यल्पोच्चात्पतने पुनः । अल्पव्यवहृतौ चाल्पा, हानिरप्यदिने तथा ॥ ७३१ ॥ चरणाय वहिर्मुक्ता, सा तेनाऽथ गलस्तनी । तस्मिन्नेव दिने जग्धा, वराकी च वृकेण सा॥ ७३२॥ क्रीत्वा क्रीत्वा वहिर्मुक्ता, तेनेत्थं त्रिदिनीमजा । परं नैकापि सन्ध्यायां, पश्चादागात्तदौकसि॥ ७३३ ॥ ततो दिनं न मे सम्प्रत्येवं निश्चित्य चेतसि। तदा किमपि नारेभे, व्यवसायं स धीनिधिः ॥ ७३४ ॥ कियत्यथ गते काले, पुनस्तेन गलस्तनी। क्रीत्वा प्राग्वद्वहिर्मुक्ता, सुषुवे युगलं च सा ॥ ७३५ ॥ एवं दिनपरीक्षार्थी,

यां यां गृह्णात्यजामयम् । सा सा प्रसूयतेऽस्यैवमजावृन्दमजायत ॥ ७३६ ॥ ततोऽधुना मे दिवसो, नूनमस्तीति निर्णयात् । प्राप्तश्चतुष्पथे प्रातः, स प्रौढव्यवसायधीः ॥ ७३७ ॥ तदैवं पञ्चभिः स्वर्णलक्षैः क्रीतं क्रयाणकम् । दूरदेशान्तरायातसार्थात्तेन मनस्विना ॥ ७३८ ॥ सर्वं तच्चार्पितं पोतवणिजां दिवसैस्त्रिभिः । सुवर्णलक्षाः पञ्चाशस्तत्र लाभेऽस्य निर्मलाः ॥ ७३९ ॥ लाभजातोद्यमश्चैवं, सुधीर्व्यवहरन्नयम् । क्रमाद्द्वादशकोटीशो, लाभकर्मोदयादभूत् ॥ ७४० ॥ परं यथा यथा वित्तं, वर्द्धते स्म तथा तथा । हृदि सम्यग् विवेकोऽस्य, स्पर्द्धयेवाधिकाऽधिकः ॥ ७४१ ॥ महेभ्यौ तौ सिद्धदत्तधनदत्तावथान्यदा । भोजनाय गृहे यान्तौ, व्यवहृत्य चतुष्पथात् ॥ ७४२ ॥ राजाद्यसुतमन्येन, राजपुत्रेण केनचित् । भृशं विवादं कुर्वाणं, क्वचिद्ददृशतुः पथि ॥ ७४३ ॥ विज्ञैर्न पार्श्वे गन्तव्यं, द्वयोर्विवदमानयोः । विवेकदृष्ट्या वीक्ष्यैवं, धनदत्तोऽन्यतो ययौ ॥ ७४४ ॥ विवेकविकलः सिद्धदत्तस्तु कलिकौतुकी । तत्राप्तः सुमनुष्यत्वात्ताभ्यां साक्षीकृतः कलौ ॥ ७४५ ॥ तदैव कलिभङ्गाय, साहंकारौ समत्सरौ । तं साक्षिणं सहादाय, तौ प्राप्तौ नृपपर्षदि ॥ ७४६ ॥ न्यायाऽन्यायं तयोः पृष्टस्तदा साक्षी स भूभुजा । सोऽन्यायं निर्विवेकत्वाच्चाऽख्यद्राजाऽङ्गजन्मनः ॥ ७४७ ॥ हृदि खिन्नो व्यवस्थायां, तदा संस्थाप्य तौ नृपः । दिनैः कतिपयैरन्यत्किञ्चिदुद्भाव्य दूषणम् ॥ ७४८ ॥ विंशतिं सिद्धदत्तेभ्यं, स्वर्णकोटीरदण्डयत् । महाजनोऽपि चोपेक्षां, द्वेष्यत्वात्तस्य निर्ममे ॥ ७४९ ॥ युग्मम् ॥ लावण्यलीलाललितौ, रूपसौभाग्यशालिनौ । सदलङ्कृतिनेपथ्यौ, ताविभ्यावथ चान्यदा ॥ ७५० ॥ राजवर्त्मनि गच्छन्तौ, मन्त्रिपत्न्या रतिश्रिया । स्मरापस्मारवशतः, साऽनुरागं विलोकितौ ॥ ७५१ ॥ रूपसौभाग्यसौन्दर्यैः, शिल्पसीमेव वेधसः । ताभ्यामपि गवाक्षस्था, युवती ददृशे च सा ॥ ७५२ ॥ जानानस्तन्महापापं, धन-

दत्तस्ततस्तदा । इवार्कबिम्बात्त्वरितं, दृशं संहृत्य जग्मिवान् ॥ ७५३ ॥ सिद्धदत्तस्त्वदान्तात्मा, निर्विवेकमनाः पुनः । तामेव वलितग्रीवं, पश्यंस्तत्र स्थितश्चिरम् ॥ ७५४ ॥ अकस्मात्तावदासेन, पुरारक्षेण तत्र सः । इङ्गिताकारकुशलेनाऽऽवध्य क्ष्माभुजार्पितः ॥ ७५५ ॥ कियन्त्यहान्यथ क्षिप्त्वा, कारागारे नृपोऽपि तम् । समृद्धत्वाद्दश स्वर्णकोटीरादाय मुक्तवान् ॥ ७५६ ॥ नात्तं दत्तं तयोर्नैकेनापि नूनं तथाऽप्यभूत् । हा ! विवेकाऽविवेकाभ्यामिति भेदः पुनर्द्वयोः ॥ ७५७ ॥ धनदत्तं रहश्चौरः, कश्चिदेत्याऽथ चान्यदा । सपादकोटीमूल्यानि, दश रत्नान्यदीदृशत् ॥ ७५८ ॥ दशाप्येतानि गृह्णीष्व, देहि मह्यं पुनर्द्रुतम् । दश द्रम्मसहस्राणि, श्रेष्ठिन्नित्यवदच्च सः ॥ ७५९ ॥ नूनं स्तैन्याहृतान्येतान्यन्यथा कथमर्पयेत् । इत्थमत्यल्पमूल्येनाऽनल्पमूल्यान्यमूल्ययम् ॥ ७६० ॥ नूनं स्तैन्यापवादाय, क्रीतं स्तैन्याहृतं सताम् । सप्तप्रकारः कुशलैश्चौरः शास्त्रे यदुच्यते ॥ ७६१ ॥ तदुक्तम्—

"चौर १ श्चौरापको २ मन्त्री, ३ भेदज्ञः ४ काणकक्रयी ५ । अन्नदः ६ स्थानदश्चैव, ७ चौरः सप्तविधः स्मृतः" ॥ १ ॥

धनदत्तो विमृश्यैवं, विवेकविकसन्मतिः । निरुध्य लोभप्रसरं, तानि रत्नानि नाऽग्रहीत् ॥ ७६२ ॥ सिद्धदत्तं ततश्चौरस्तानि सोऽदीदृशद्रहः । स च लोभाभिभूतात्मा, हृष्टस्तान्यग्रहीद् ध्रुवम् ॥ ७६३ ॥ पूर्णपापघटश्चौरः, सोऽथ लोप्त्रकरोऽन्यदा । चटितो नगरारक्षहस्ते नश्यन्नितस्ततः ॥ ७६४ ॥ कशाभिर्निर्दयं निघ्नस्तं चौरमथ सोऽब्रवीत् । प्राच्यं लोप्त्रं हि निःशेषं, क्वास्तीति वद रे ! स्फुटम् ॥ ७६५ ॥ ताड्यमानः कशाघातैस्तदा तेन स तस्करः । यदभूद्यत्र तन्नामस्थानाभ्यां सर्वमब्रवीत् ॥ ७६६ ॥ प्राच्यचौर्यगतानेकवस्तुप्राप्तिप्रमोदभाग् । अधिकाऽधिकवित्तार्थी, पुरारक्षोऽवदत्पुनः ॥ ७६७ ॥

रत्नानि क्ष्माभुजः कोशाद्यान्यात्तानि त्वया पुरा । तानि रे ! क्वेति स तदा, कम्पमानः पुनर्जगौ ॥ ७६८ ॥ तानि प्राग् धनदत्ताय, दर्शितानि मया रहः । नाऽगृह्णात्स त्वहं सिद्धदत्तायार्प्पितवांस्ततः ॥ ७६९ ॥ पुरारक्षोऽथ तद्वृत्तं, सर्वं राज्ञे न्यवेदयत् । सोऽतीव कुपितः स्तैन्याहृतरत्नक्रयात्तदा ॥ ७७० ॥ सिद्धदत्तेभ्यमाकार्य, सद्यो गुप्तिगृहेऽक्षिपत् । सर्वथा चाऽन्नपानीयनिषेधं तस्य निर्ममे ॥ ७७१ ॥ युग्मम् ॥ धनाढ्यतायामप्यागात्कार्येऽन्येषां नहि क्वचित् । कष्टे तस्येत्यनिष्टस्योपेक्षां पौरा व्यधुः पुनः ॥ ७७२ ॥ दिनैः कतिपयैः सोऽथ, बाध्यमानः क्षुधादिभिः[1] । क्ष्माभुजे सद्मसर्वस्वं, समर्प्य स्वममूमुचत् ॥ ७७३ ॥ सद्माप्तः सोऽथ तद्रिक्तं, धनधान्यादिवस्तुभिः । इष्टाङ्गमिव निर्जीवं, वीक्ष्याऽभूद्गुरुदुःखभाग् ॥ ७७४ ॥ दध्यौ पुनर्मनस्येवमियत्कालं ममौकसि । देवीप्रसादात्कमला, समागात्सर्वतोमुखी ॥ ७७५ ॥ त्यागभोगवियुक्तस्य, मुक्तस्य स्वजनादिभिः । निर्विवेकस्य मे सम्प्रत्येवमेवागमच्च सा ॥ ७७६ ॥ ऐहिकामुष्मिकौचित्यकृत्येषु श्रीर्ममौकसि । सोपयोगा क्वचिन्नाभूदटव्यामिव मालती ॥ ७७७ ॥ ततः स्वभावाच्चपलां, विपुलां कमलामिमाम् । एकान्तेनैतदासक्तं, मूर्खराजं हि मां च धिग् ॥ ७७८ ॥ उभाभ्यां लब्धमावाभ्यां, देवीपार्श्वाद्यथार्थितम् । फले तत्तु वैचित्र्यं, हहाऽभूत्प्राच्यकर्मणा ॥ ७७९ ॥ इति मानसिकाऽनेकदुःखदाहार्दिताशयः । भवाद्विरक्तः समभूत्सिद्धदत्तश्च तापसः ॥ ७८० ॥ धनदत्तमथाहूयेत्यवग् राजा सविस्मयम् । बहुलाभेऽपि रत्नानि, श्रेष्ठिन्नात्तानि किं त्वया ? ॥ ७८१ ॥ आशक्रकीटं सर्वत्राऽस्खलितप्रसरः पुनः । लोभः स्वचित्ते प्रविशन्, कथं नाम न्यरुध्यत ? ॥ ७८२ ॥ स्वनिर्दोषत्वनिशङ्कः,

---

१ ' क्षुदाधिभिः' इत्यपि ।

सोऽप्यवादीत्तदा नृपम् । लोभमूलानि पापानि, लोभश्चेदगुणेन किम् ? ॥ ७८३ ॥ इत्याद्यनेकशास्त्राथान्, मन्त्रवत्स्मरतोऽन्वहम् । ममासन्नीभवेल्लोभपिशाचो नहि कर्हिचित् ॥ ७८४ ॥ युग्मम् ॥ अन्यच्च बहुलाभेऽपि, स्तैन्यं स्तैन्याहृतं च यत् । त्याज्यं विशुद्धन्यायाध्वाऽध्वनीनैः सर्वथोत्तमैः ॥ ७८५ ॥ स्वामिन्! सन्तोषमादृत्य, तानि नाऽत्तानि तन्मया । ततो निर्लोभताहृष्टः, सच्चक्रे तं भृशं नृपः ॥ ७८६ ॥ अनासक्ततया सप्तव्यसनेष्वथ सर्वदा । शुद्धव्यवहृतौ निष्ठतया सद्धर्म्मवत्तया ॥ ७८७ ॥ तथ्यपथ्यप्रियोक्तित्वात्सर्वत्रौदार्यतस्तथा । वर्द्धमानमहत्त्वार्द्धिः, सोऽभूत्सर्वजनप्रियः ॥ ७८८ ॥ ॥ युग्मम् ॥ अथान्यदा नृपसदो, धूर्त्तः कोऽप्यागमत्करे । प्रत्येकं कोटिमूल्यानि, पञ्चरत्नानि दर्शयन् ॥ ७८९ ॥ सावष्टम्भमवक् चैवं, समुद्रेऽस्ति कियज्जलम् । कर्दमश्च कियानेवं, संशयो हृदि मे चिरात् ॥ ७९० ॥ न्यूनाधिकत्वं यः सम्यग्, विद्वान् वेत्त्यनयोर्ध्रुवम् । मां च प्रत्याययेत्तस्मै, पञ्चाप्येतान्यहं ददे ॥ ७९१ ॥ दुर्बोधः संशयस्तस्य, न भग्नस्तत्र केनचित् । किंवदन्ती त्वियं नव्या, सर्वत्र प्रासरत्पुरे ॥ ७९२ ॥ धनदत्तः पुरक्ष्मापमहत्त्वं रक्षितुं तदा । तत्रागात्तत्सुरीदत्तविवेकोत्पन्नसन्मतिः ॥ ७९३ ॥ ऊचे चाब्धौ जलं स्तोकं, भद्र! भूयांश्च कर्दमः । तव चित्ते न चेदत्र, मदुक्ते प्रत्ययो ध्रुवम् ॥ ७९४ ॥ सर्वाः स्रवन्तीर्गङ्गाद्या, निपतन्तीर्निवार्य तत् । सिन्धुस्सर्वाम्भसां संख्यां, सावधानमनाः सृज ॥ ७९५ ॥ पश्चात्तदम्बु निःशेषं, पृथक् कृत्वा च वारिधेः । पङ्कसंख्यां कुरुष्वात्र, स भूयान् भविता ध्रुवम् ॥ ७९६ ॥ इत्यसाध्यविदग्धोक्तियुक्तिप्रतिहतश्च सः । स्वस्य व्रीडाविलक्षास्यो, मन्यमानः पराजयम् ॥ ७९७ ॥ समर्प्योक्तानि रत्नानि, धनदत्ताय सत्वरम् । यातो निर्गत्य नगराद्धस्यमानो जनैः क्वचित् ॥ ७९८ ॥ युग्मम् ॥ प्रशस्यमानसद्बुद्धिस्तुष्टेन क्ष्माभुजा

भृशम् । सत्कृतो धनदत्तश्च, सोत्सवं स्वगृहे ययौ ॥ ७९९ ॥ कश्चिन्महेभ्यसार्थेशवेषभाक् तत्र चाऽन्यदा । धूर्त्तोऽथ स्फारशृङ्गारः, सुरूपो नवयौवनः ॥ ८०० ॥ स्वर्णद्वादशकोटीशाऽनङ्गलेखापणस्त्रियाः । रूपसौभाग्यवसतेरागात्सद्मनि गूढहृत् ॥ ८०१ ॥ युग्मम् ॥ तदा नूनं महेभ्योऽयं, कोऽपीत्यावर्जनाय सा । स्वानुरागं दर्शयन्ती, जजल्प कपटे पटुः ॥ ८०२ ॥ स्वप्ने मयाद्य त्वत्प्राप्ता, द्वादश[1] स्वर्णकोटयः । कल्पद्रुकल्पे सद्मास्ते, सत्यं ह्येतदभूत्त्वयि ॥ ८०३ ॥ धूर्त्तोऽप्यूचे शुभे ! सत्यमेतत्स्वप्नेऽद्य यन्मया । द्वादश[2]स्वर्णकोट्यो हि, न्यासे मुक्तास्तवौकसि ॥ ८०४ ॥ सद्भोगसुखलुब्धात्मा, वर्षाणि द्वादशान्वहम् । तव वेश्मनि वत्स्यामि, निगद्येति स्फुटाक्षरम् ॥ ८०५ ॥ परं देशान्तरे सार्थश्चलन्नस्त्यधुनोत्सुकः । व्यवसाये महाँल्लाभस्तत्र चाप्तवतोऽद्य मे ॥ ८०६ ॥ तत्तत्र गत्वा त्वरितं, बहूपार्ज्य धनं पुनः । त्वत्सौभाग्यगुणाकृष्टः, समेष्यामि त्वदौकसि ॥ ८०७ ॥ तेनाद्यार्पय ताः स्वर्णकोटीर्द्वादश सत्वरम् । धूर्त्तेनेति ब्रुवाणेन, गृहीता तेन सा करे ॥ ८०८ ॥ किमेतदिति जल्पन्ती, नीता चाशु चतुष्पथम् । विवादः स तयोर्भग्नः, सुधियापि न केनचित् ॥ ८०९ ॥ सर्वत्र पूर्वं पण्यस्त्री, हास्यास्पदमियं पुनः । वराकी तद्विवादेन, विशिष्याऽजनि निष्कला ॥ ८१० ॥ तत्कथंचित्ततो धूर्त्तविषादान्मुक्तिमिच्छती । भृत्यैः पुरान्तः पटहं, सा सर्वत्रेत्यवीवदत् ॥ ८११ ॥ विवादान्मोचयत्यस्माद्यो मां सम्प्रति सत्पुमान् । स मे बन्धुः परस्तस्मै, स्वर्णकोटिं ददे पुनः ॥ ८१२ ॥ तत्राऽगाज्ज्ञाततद्वृत्तो, विवेकविकसन्मतिः । तयोर्विवादभङ्गार्थं, धनदत्तस्तदा द्रुतम् ॥ ८१३ ॥ पाणिस्थद्वादशस्वर्णकोटिमूल्यमहामणिः । दर्शयन्वामपाणिस्थादर्शे तान्प्रतिबिम्बितान् ॥ ८१४ ॥ युग्मम् ॥

१ 'स्वर्णद्वादशकोटयः' इत्यपि । २ 'स्वर्णद्वादशकोट्यो हि' इत्यपि ।

धूर्तमूचे च लाह्येतान्, विमुञ्चैतां पणस्त्रियम् । सोऽप्याख्यदेतैरादर्शबिम्बितैः करवाणि किम् ? ॥ ८१५ ॥ धनदत्तोऽप्यु-
वाचैवं, यादृशी भद्र! भावना । सिद्धिर्हि तादृशी यादृग्, देवः पात्री च तादृशी ॥ ८१६ ॥ त्वया स्वप्नेऽर्पितं यादृगस्या
अप्यनया धनम् । प्रत्यर्प्यमाणं चाद्यास्ते, तादृक् ते प्रतिबिम्बितम् ॥ ८१७ ॥ न दोषः कश्चिदत्रेति, स धूर्त्तोऽथ निरु-
त्तरः । यथागतमगाद्व्रीडाविलक्षस्त्वरितं क्वचित् ॥ ८१८ ॥ निर्मुक्ताऽथं ततो मिथ्याविवादान्मुदिताशया । धनदत्ताय
सा स्वर्णकोटिं समधिकां ददौ ॥ ८१९ ॥ एवं प्रवर्धमानर्द्धिर्धनदत्तः स धीनिधिः । षट्पञ्चाशत्स्वर्णकोटीस्वामी समजनि
क्रमात् ॥ ८२० ॥ अथान्येद्युः पुरे तत्र, क्रव्यात्कोऽप्यागमद्बली । गृहीतश्च नृपस्तेन, प्राप्तः प्रान्तदशां द्रुतम् ॥ ८२१ ॥
नभःस्थो न्यगदत्सोऽथ, क्रव्यादो यदि कोऽपि मे । ददाति बलिमात्मानं, तन्मुञ्चे नृपतिं ध्रुवम् ॥ ८२२ ॥ अमात्यप्र-
मुखाः सर्वे, तदुक्तं कर्त्तुमक्षमाः । सत्त्वहीनतया ह्रीणाः, पौरा नीचैर्व्यलोकयन् ॥ ८२३ ॥ परोपकृतिनिष्णातो, धनदत्त-
स्तदा ददे । रक्षसे बलिमात्मानं, क्ष्मापरक्षाचिकीः स्वयम् ॥ ८२४ ॥ तत्सत्त्वतुष्टः क्रव्यादो, विमुच्याऽथ नृपं द्रुतम् ।
तस्मै च द्वादश स्वर्णकोटीर्दत्त्वा तिरोदधे ॥ ८२५ ॥ कश्चिद्व्यन्तरजातीयो, मांसाशी नहि कर्हिचित् । किन्त्वीदृग्
याचते नूनं, सत्त्वमेवेक्षितुं नृणाम् ॥ ८२६ ॥ कृतज्ञोऽथ स भूजानिरतीवात्मोपकारिणम् । धनदत्तं व्यधान्मुख्यं, सर्वत्र
व्यवहारिषु ॥ ८२७ ॥ भद्रकप्रकृतिः प्रायः, पापभीरुमनाः सना । सौम्यदृष्टिः स भूजानिरिति पालयति प्रजाः
॥ ८२८ ॥ अथाऽन्यदा वसन्तर्त्तौ, सान्तःपुरपरिच्छदः । जग्मिवान्बहिरुद्याने, स नृपः केलिकौतुकी ॥ ८२९ ॥ तत्र
यावच्च मध्याह्ने, सूपकारैर्नृपाज्ञया । नानारसवतीपाकः, क्रियमाणोऽस्ति सोद्यमम् ॥ ८३० ॥ तावत्क्षुत्तृड्भृशग्लानाः,

सार्थभ्रष्टा महर्षयः । केचिदीयुस्त्रिभिर्घस्रैस्तत्रोल्लङ्घ्य महाटवीम् ॥ ८३१ ॥ साऽनुकम्पहृदा राज्ञा, वल्लभाभिश्च तस्य ते । तदा तन्दुलनीरेण, प्रासुकेन निमन्त्रिताः ॥ ८३२ ॥ समयोपनतं शुद्धं, तद्विज्ञायाददेऽद्य तैः । विलोक्यमानं तत्रैकनान्दीभाजनपूरकम् ॥ ८३३ ॥ तत्रैवासन्नवृक्षस्य, च्छायायामेत्य सत्वरम् । पीयूषमिव तत्पीत्वा, स्वास्थ्यमापुर्महर्षयः ॥ ८३४ ॥ उपदेशमथ श्रुत्वा, तत्रैत्य स नृपः क्षणम् । लघुकर्मा प्रपेदानः, श्राद्धधर्म्मं प्रियायुतः ॥ ८३५ ॥ सश्रद्धाराद्धसुश्राद्धधर्मः काले मृतोऽथ सः । रत्नपाल ! प्रजापाल !, भवान् भाग्यैकभूरभूत् ॥ ८३६ ॥ दुःखदाहोत्थवैराग्यसिद्धदत्तः स तापसः । अज्ञानकष्टः क्रियया, जयामात्योऽभवत्पुनः ॥ ८३७ ॥ तदा लोभेन तत्पोतं, द्वादशाऽहानतिष्ठिपः । तद्वैरात्सोऽत्र ते राज्यं, वर्षाणि द्वादशाऽग्रहीत् ॥ ८३८ ॥ ऋणं वैरं द्वयं चैतन्नृभिर्मौर्ख्यादुपेक्षितम् । जन्मकोटिसहागामि, नहि जीर्यति कर्हिचित् ॥ ८३९ ॥ तेषामध्यवसायस्य, विशेषादन्यजन्मनि । भूत्वा शतसहस्रादिगुणं तच्चोपतिष्ठते ॥ ८४० ॥ जीवस्तु धनदत्तस्य, श्राद्धो वैदेशिकोऽभवत् । प्राच्योपकाराद् ग्लानत्वे, यं तदा प्रत्यजागरीः ॥ ८४१ ॥ यश्च त्वत्कारितप्रान्ताराधनानशनक्रियः । सुरीभूतः कृतज्ञत्वादुपचक्रे तदा तदा ॥ ८४२ ॥ प्राच्यपद्यो नवाप्यत्र, स्नेहादेत्य तवाऽमिलन् । नीरदानोल्लसद्भोगसत्कर्मसहभुक्तये ॥ ८४३ ॥ श्रीदेवी चाऽभवत्तासु, राज्ञी शृङ्गारसुन्दरी । यच्च जन्मसहस्रात्प्राक्, तारुण्योन्मत्तया तया ॥ ८४४ ॥ हास्येनाच्छोटितो धूल्या, कायोत्सर्गस्थितो मुनिः । नानाविडम्बनाश्वास्या, जातास्तेनाऽत्र जन्मनि ॥ ८४५ ॥ युग्मम् ॥ रे कुष्ठिन् ! न करोष्येतन्मदुक्तं किमु सत्वरम् ?। भृत्यः कनकमञ्जर्येत्याकुष्टः प्राच्यजन्मनि ॥ ८४६ ॥ इत्थं च गुणमञ्जर्या, रे किमन्ध ! न पश्यसि ? । तत्तद्व्याधिरभूदत्र,

तत्तत्कर्म फलं तयोः ॥ ८४७ ॥ आक्रोश्यैवं च यत्ताभ्यां, विदधेऽनुशयो मनाक् । तेनापीदृग्विधो व्याधिरुपशान्तः पुनस्तयोः ॥ ८४८ ॥ यदेकतुम्बकमितं, निर्दोषं तन्दुलोदकम् । समये श्रद्धया दत्तं, सुसाधुभ्यस्तदा त्वया ॥ ८४९ ॥ सर्वार्थसाधकमिदं, तत्तेऽभूद्रसतुम्बकम् । निःसपत्नं च साम्राज्यं, सदोदित्वरसन्महः ॥ ८५० ॥

वृत्तं प्राच्यभवस्येदृक्, सम्यक् सर्वविदो मुखात् । निशम्य सप्रियो राजा, जातिस्मरणमाप सः ॥ ८५१ ॥ यथोक्तं तेन तद्वृत्तं, वीक्ष्य साक्षादिवाऽखिलम् । प्राप्तश्चाऽभङ्गवैराग्यं, चेतस्येवमचिन्तयत् ॥ ८५२ ॥ दुःखैकसारे संसारे, संसरद्भिः शरीरिभिः । भुक्ता ह्यनन्तशस्तृष्णातरलैर्विषयाः पुरा ॥ ८५३ ॥ तथापीह भृशासक्तिभृतस्तेष्वेव ही ! जडाः । आचरन्त्यार्हतं धर्म्मं, न प्रेत्य हितमात्मनः ॥ ८५४ ॥ शरत्कालाऽभ्रपटलं, विलीयेताऽनिलाद्यथा । मन्ये तथात्र संसारे, सर्वं क्षणविनश्वरम् ॥ ८५५ ॥ कल्लोललोला कमला, पुनरत्रेष्टसङ्गमाः । मार्गस्थतरुविश्रान्तसार्थसंयोगसन्निभाः ॥ ८५६ ॥ आपातमधुराः सर्वे, विषयाः प्रान्तदारुणाः । रम्भान्तरिव संसारे, सारं किञ्चिन्न वीक्ष्यते ॥ ८५७ ॥ क्षणदृष्टविनष्टत्वात्स्वप्नः सर्वमिदं भुवि । एको भवति सुप्तानां, द्वितीयो जाग्रतां पुनः ॥ ८५८ ॥ प्रतिक्षणमयं कायः, क्षीयमाणो न लक्ष्यते । वारिमुक्तामघटवद्विशीर्णः स विभाव्यते ॥ ८५९ ॥ आयुर्नासाग्रसञ्चारिनिःश्वासोच्छ्वासकैतवात् । अत्यन्तगमनायेव, सदाऽभ्यासे कृतोद्यमम् ॥ ८६० ॥ येभ्यो जाताश्चिरात्तावत्ते गताः स्वसमानपि । पश्यन् प्रयातो मरणं, हन्तात्मायमनाकुलः ॥ ८६१ ॥ यदुक्तम्—

"वयं येभ्यो जाताश्चिरतरगता एव खलु ते, समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।

इदानीमेते स्मः प्रतिदिनसमासन्नपतना, गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः" ॥ १ ॥

चिरं स्थित्वाऽपि विषयाः, प्रयास्यन्ति न संशयः । तस्मादेते स्वयं त्यक्ता, वरं सुखकृतो हि ते ॥ ८६२ ॥ यदुक्तम्—

"अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया, वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ॥
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः । स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति" ॥ १ ॥

तदसारेऽत्र संसारे, विहाय विषयान्तरम् । संगृह्णीत सुधीर्द्धर्मं, सारं सर्वज्ञभाषितम् ॥ ८६३ ॥ इत्याशुविषयाशंसा-विरक्तो विमलाशयः । रत्नपालनृपः सोऽभूत्प्रवज्याग्रहसाग्रहः ॥ ८६४ ॥ आर्पिताः परमां प्रौढिं, तेन सत्कृत्य सद्गुणैः । प्रधानामात्यसामन्ताः, सखेदं तं तदोचिरे ॥ ८६५ ॥ त्वदेकजीविताः स्वामिंस्त्वत्तः कल्पद्रुमाच्च्युताः । वयं सुमनसो नूनं, भविष्यामः कथं हहा ! ? ॥ ८६६ ॥ इयानन्तःपुर[1]जनो, नानाभोगोचितः कथम् ? । भावीत्युक्तस्त्वया मूर्द्धभ्रष्टके-शकलापवत् ॥ ८६७ ॥ न्यायनिष्ठ ! गुणश्रेष्ठ !, त्वया पालितपोषिताः । लप्स्यन्तेऽमूः प्रजा मातापितृसौख्यं कुतोऽ-न्यतः ? ॥ ८६८ ॥ सम्मोहोद्दीपनैरित्यादिभिर्वाक्यैस्तदीरितैः । वैराग्ये सुस्थिरं राज्ञो, नाऽकम्पत मनो मनाक् ॥ ८६९ ॥ सोऽथ मेघरथं पुत्रं, प्रतिरूपमिवात्मनः । निवेश्य राज्ये राजन्यसमक्षमनुशिष्य च ॥ ८७० ॥ श्रीमज्जिनमतोद्द्योतं, चिकीर्षुः सर्वतो जने । कृत्वा प्रियाभिः सहितश्चैत्येष्वष्टाह्निकामहम् ॥ ८७१ ॥ दीनादिभ्यो ददद्दानं, पुत्रकृतैर्महामहैः । महासे-नमुनेः पार्श्वे, प्रव्रज्यां प्रतिपन्नवान् ॥ ८७२ ॥ त्रिभिर्विशेषकम् ॥ चारित्रं निरतीचारं, शुचिचित्तः समा[2]चरत् । तपोऽथ

---

१ 'पुरीवर्गो' इत्यपि । २ 'समाचरन्' इत्यपि ।

दुस्तपं तप्त्वा, कालेऽभूत्स सुरो महान् ॥ ८७३॥ देवर्द्धिमद्भुतां भुक्त्वा, सचिरं दिवि सप्रियः। महाविदेहे मानुष्यं, प्राप्य सेत्स्यति चाऽचिरात् ॥८७४॥ निस्समानसमृद्धीनां, निदानं दानमुज्ज्वलम्। इति मत्वा मनःशुद्ध्या, यतध्वं तत्र सत्तमाः ॥ ८७५॥

( अथ प्रशस्तिः )

आसंस्तपागणेशाः श्रीसोमसुन्दरसूरयः। युगप्रधानास्तत्पट्टे, सूरिश्रीमुनिसुन्दराः ॥ ८७६ ॥ तेनिवांस्तत्पदाम्भोजभ्रमरः सोममण्डनः। एतां स्वाऽन्योपकाराय, दानमाहात्म्यसत्कथाम् ॥ ८७७ ॥ एषा प्रसद्य धीमद्भिः, शोधनीया शुभाशयैः। वाचनीया च सुचिरं, श्रेयःशर्मकृतस्पृहैः ॥ ८७८ ॥ मुनिसुन्दरसूरीशपट्टे विजयिनोऽधुना। श्रीरत्नशेखरगणाधीशा वः शिवसम्पदे ॥ ८७९ ॥

इति श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिपट्टप्रभाकरगच्छनायकश्रीमुनिसुन्दरसूरिविनेयवाचनाचार्यसोममण्डनगणिकृता सत्पात्रपानीयदाने श्रीरत्नपालनृपकथा समाप्ता ॥

अद्यावधि श्रीआत्मानन्द-ग्रन्थरत्नमालायां प्रकाशिताना ग्रन्थानां

# सूचिका

| | | | |
|---|---|---|---|
| १० | नवतत्त्वप्रकरणम् । | श्रीदेवगुप्ताचार्यः | |
| | ” भाष्यम् | श्रीअभयदेवाचार्यः | ७२ |
| | ” ” विवरणम् | श्रीयशोदेवोपाध्यायः | |
| ११ | जम्बूचरित्रम् । | श्रीजयशेखरसूरिः | २९ |
| १२ | रत्नपालनृपकथानकम् । | वाचनाचार्यसोममण्डनगणिः | ३२ |

उपरिलिखिता एते ग्रन्थाः प्रवर्त्तकश्रीमन्मुनिकान्तिविजयचरणाब्जचञ्चरीकायमाणैः श्रीमच्चतुरविजयमुनिभिर्महता प्रयासेन संशोधिता; अस्माभिश्च तत्तच्छ्रेष्ठिमहोदयानां द्रव्यसाहाय्येन मुम्बईस्थनिर्णयसागरयन्त्रालये सुप्रबन्धेन प्रकाशिताः । एते च मुनिवरेभ्यः संघसंबन्धिजैनपुस्तकभाण्डागारेभ्यश्च डाकव्ययमात्रप्रेषणेनाऽमूल्यं समर्प्येरन् । तदितरेभ्यः. समुचिताल्पमूल्येन प्रेषयिष्याम इति निवेदयति सविनयम्—

श्रीजैन—आत्मानन्द—सभा.
भावनगर

समाप्तमिदं वाचनाचार्यश्रीसोममण्डनगणिविरचितं
रत्नपालनृपकथानकम् ।